हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़पुस्तकमालायाः

५४

काव्यविभागे (७) सप्तमं पुष्पम्।

पर्वतीय-विद्वद्वर-श्रीविश्वेश्वर पाण्डेयनिर्मिता—

# अलङ्कारमुक्तावली।

नेपालदेशीय-
पण्डित श्रीविष्णुप्रसादभण्डारिणा
संशोधिता।

काश्यां—

चौखम्बासंस्कृतग्रन्थमालाप्रकाशक-श्रीयुतहरिदासगुप्तात्मज-
श्रीजयकृष्णदासगुप्तमहाशयेन स्वकीये 'विद्याविलास'
नाम्नि यन्त्रालये मुद्रयित्वा प्रकाशिता।

KASHI-SANSKRIT-SERIES
(HARIDAS SANSKRIT GRANTHMALA)
54.
( *Kavya Section No. 7* )

# ALANKAR MUKTAVALI

BY

PARVATIYA SRI VISVESVARA PANDEYA

Edited by

*Vishnu Prasad Bhandari of Nepal.*

*Printed Published & Sold By*
JAI KRISHNA DAS-HARI DAS GUPTA,
CHOWKHAMBA SANSKRIT SERIES OFFICE,
Vidya Vilas Press, North of Gopal Mandir,
Benares City ( India )

## Agents:

1 Luzac & co, Booksellers,
LONDON

2 Otto Harrassowitz, Leipzig.
GERMANY.

3 The Oriental Book-supplying Agency,
POONA

# भूमिका।

इयमलङ्कारमुक्तावली कूर्माचलदेशीय-पाण्डेयकुलतिलकविद्वद्वर-श्रीविश्वेश्वरशर्मणः कृतिः। एतदीयेतिवृत्तं पूर्वं मुद्रिताया अदसीयार्यासप्तशत्या भूमिकातोऽवगन्तव्यमितिहासरसिकैः सहृदयैः। प्रबन्धोऽयमुक्तकविना अलङ्कारकौस्तुभनामकं विस्तृतमलङ्कारविषयकं ग्रन्थरत्नं निर्माय पश्चान्निर्मित इति ग्रन्थकर्त्रा आरम्भ एव "नानापक्षविभावन" इतिपद्येन स्वयमेव प्रतिपादितम्।

ग्रन्थकर्त्रा अलङ्कारकौस्तुभस्था एव कारिका अत्र स्वल्पविवृतिसहिताः कृत्वा सन्निवेशिताः। उदाहरणपद्यानि तु प्रायो नूतानि सन्निवेशितानीति विशेषः। अलङ्कारकौस्तुभमभ्यसितुमिच्छतां सुतरामुपयोगीदं प्रबन्धरत्नं मुमुद्रयिषुणा नैकविधामुद्रितचरग्रन्थरत्नमुद्रणप्रवणेन श्रेष्ठिहरिदासतनूजेन श्रीजयकृष्णदासगुप्तमहाशयेन शोधनकृते प्रार्थितोऽहं प्रावर्तिष्येतच्छोधनाय।

आदर्शपुस्तकं तु अलवरस्थराजमान्यश्रीयुत-पण्डितचन्द्रदत्तशास्त्रिणः सकाशादानाय्य तेनैव दत्तं शुद्धप्रायमेकमेव। विषयानुक्रमणिकोदाहरणपद्यानुक्रमणिकादानेन अभ्याससौकर्याय कारिकाणां पृथक्सन्निवेशेन च परिष्कृत्य सपरिश्रमं संशोधितेऽप्यत्र मानुष्यकनान्तरीयकदोषजातानि, स्खलितानि मर्षयिष्यन्ति ग्रन्थतत्त्वमात्रजिज्ञासाग्रहिला धीरवरा इति—

प्रार्थयते—

१९८४ वैशाखकृष्णे
८ तिथौ चन्द्रवासरे

विनीतो विदुषां विधेयो
नेपालाभिजनो
विष्णुप्रसाद भण्डारी।

# कारिकाः ।

सन्मूलप्रकृतिः प्रकाशितशतानन्दो दधानः क्षमां
कृष्णं वापि सुमन्तुनैकगुरुताशाली नयन्पूज्यताम् ।
सद्वृत्तिं दधदात्मभूतनयतामारुन्धते यस्य ता-
माचार्यः प्रथमो गिरां विजयते विद्वान्स लक्ष्मीधरः ॥ १ ॥
नानापक्षविभावनकुतुकमलङ्कारकौस्तुभं कृत्वा ।
सुखबोधाय शिशूनां क्रियते मुक्तावली तेषाम् ॥ २ ॥
तत्रैकवाक्यवाच्यं सादृश्यं भिन्नयोरुपमा ॥
वाचकधर्मसमत्वप्रतियोग्यनुयोगिनां ग्रहे पूर्णा ॥ १ ॥
श्रौत्यार्थी सा द्विविधा वृत्तौ वाक्ये च तद्धिते तद्वत् ॥
स्यादिवपदादियोगे वतौ तदर्थेऽपि सा श्रौती ॥ २ ॥
तुल्यादिकपदयोगे वतौ तदर्थेऽपि चार्थी सा ॥
अन्यतमस्य चतुर्णां विरहे लुप्तां वदन्त्याप्ताः ॥ ३ ॥
धर्मोपमानवाचकमध्येऽन्यतमस्य लुप्तत्वे ॥
धर्माङ्गकयोरङ्गकसमयोः समधर्मयोः समान्येषाम् ॥ ४ ॥
धर्मविलुप्श्रौत्यार्थी वाक्ये वृत्तौ च तद्धिते त्वार्थी ॥
वाक्यसमासोभयगोपमानलोपे न वाक्यगाङ्गकलुक् ॥ ५ ॥
वृत्तौ कर्माधारक्याचि क्याङि स्यात् द्विधा णमुलि ॥
धर्मद्योतकलुप् क्विप्समासयोः क्याचि समाङ्गकलुप् ॥ ६ ॥
धर्मोपमानलुप्ता वृत्तौ वाक्ये समान्यलुप् वृत्तौ ॥
मालोपमेयमुक्ताप्येकार्स्मिश्चेद्बहूपमानसम्बन्धः ॥ ७ ॥
सामान्यधर्मभेदाभेदाभ्यां सापि च द्वेधा ॥
पूर्वोपमोपमेयं यद्युपमानं परोपमायां स्यात् ॥ ८ ॥

स्थानोपमेयमुक्ता द्वैविध्यं प्राग्वदेवास्याः ॥
यत्रैकावच्छिन्ने स्तामुपमानोपमेयत्वे ॥ ९ ॥
अन्यसदृशं निषेद्धुं तमनन्वयसंज्ञमाचख्युः ॥
उपमायां पूर्वस्यां प्रतियोग्यनुयोगिनौ यौ तु ॥ १० ॥
तौ विपरीतौ परतश्चेदुपमेयोपमा त्वेषा ॥
सम्भाव्यते सह यदा साम्यप्रतियोगिना तदुपमेयम् ॥ ११ ॥
तामुत्प्रेक्षामाहुर्भिन्नं हेत्वादिविषयत्वात् ॥
प्रकृते तदन्यविषया सादृश्यज्ञानजन्या या ॥ १२ ॥
बुद्धिर्निश्चयभिन्ना तामाचख्युः ससन्देहाम् ॥
उक्ते विशेषधर्मे प्रकृतस्य भवेदनुक्ते च ॥ १३ ॥
तद्रूपकं त्वभेदः स्यादुपमानोपमेययोर्यत्र ॥
आरोप्याः शाब्दाश्चेत्कथयन्ति समस्तवस्तुविषयं तत् ॥ १४ ॥
एकदेशविवर्त्ति तच्छ्रौतार्थत्वे तु साङ्गे द्वे ॥
निरवयव तु तदुक्तं यद्येकारोपसाधकं नान्यत् ॥ १५ ॥
मालारूपकमुक्तं त्वेकस्मिन्भूयसां यदारोपः ॥
अन्यारोपाभावप्रयोजकस्य स्वभावस्य ॥ १६ ॥
प्रतियोगी परकीयारोपो यस्तत्परम्परितम् ॥
तच्च श्लेषभिदाभ्यामारोपनिमित्तशब्दस्य ॥ १७ ॥
प्रकृते निषिध्य भिन्नात्मतया प्रोक्तात्रपह्नुतिः कथिता ॥
उभयविशेष्यान्वितयोरेकेन प्रोक्तिरर्थयोः श्लेषः ॥ १८ ॥
यत्र प्रकारवाचकपदमात्रं व्यङ्ग्यवाच्यसामान्यम् ॥
तच्छक्तेरप्रकृतार्थोक्तिः सोक्ता समासोक्तिः ॥ १९ ॥
उपमापर्यवसन्नो यत्रार्थोऽन्योन्यमन्वयानर्हः ॥
यच्च क्रियया कारणकार्यान्वयधीर्निदर्शना सोक्ता ॥ २० ॥
अप्रस्तुतप्रशंसा प्रकृतिप्रतिपत्तिरेतया यत्र ॥
कार्ये हेतौ व्याप्यव्यापकयोरन्यगीः समे तस्य ॥ २१ ॥

अप्रकृतेन निगीर्णे साध्यवसानाश्रयात्प्रकृते ॥
प्रकृतस्याप्यधिकत्वे यद्येवं स्यात्तथापत्तौ ॥ २२ ॥
स्याज्जन्यजनकपौर्वापर्यत्यागश्च सा त्वतिशयोक्तिः ॥
साहृश्यपर्यवसिते यस्मिन्वाक्यद्वये धर्मः ॥ २३ ॥
एकोऽपि द्विरुपात्तस्तां प्रतिवस्तूपमामाहुः ॥
साधारणस्य साम्यप्रतियोग्यनुयोगिनोर्यत्र ॥ २४ ॥
निर्देशः स्यात् बिम्बप्रतिबिम्बतया स दृष्टान्तः ॥
प्रकृताप्रकृतानां यद्येकान्वयितास्ति दीपकं तत्स्यात् ॥२५॥
यत्रैकमेव कारकमन्वयमेति क्रियासु बह्वीषु ॥
माला तु पूर्वपूर्वे (१)विधान्तरेणोत्तरान्वयिनि ॥ २६ ॥
प्रकृतानां तादृक्के भिन्नानां वापि तुल्ययोगित्वम् ॥
उभयोः साम्यप्रोक्तौ विशेष उपमेयगो व्यतिरेकः ॥२७॥
हानिप्रकर्षहेत्वोरुक्तौ त्रेधा च तदनुक्तौ ॥
शब्दार्थाक्षेपोत्थे साम्ये श्लेषे च दिग्युगमितः सः ॥२८॥
इष्टस्याप्यभिधातुं योऽर्थस्य विशेषबोधाय ॥
स्वयमेव प्रतिषेधः स वक्ष्यमाणोक्तविषय आक्षेपः ॥२९॥
हेतुं विनापि कार्यं यत्रोक्तं स्याद्विभावना सा तु ॥
हेतौ सत्यपि कार्यानुत्पत्तिः स्याद्विशेषोक्तिः ॥ ३० ॥
निर्देशक्रमतो यदि समन्वयस्तद्यथासङ्ख्यम् ॥
यदि सामान्यविशेषौ समर्थ्येते विशेषसामान्ये ॥ ३१ ॥
साधर्म्याद्वैधर्म्यादपि वा सोऽर्थान्तरन्यासः ॥
अविरोधेऽपि विरोधो यत्रोक्तः स्याद्विरोधः सः ॥ ३२ ॥
स्याज्जातेर्गुणकर्मद्रव्याणां स्वस्वपरयोगात् ॥
यो वस्तुनः स्वभावस्तस्य निरुक्तिः स्वभावोक्तिः ॥ ३३ ॥
व्याजस्तुतिर्विपर्ययपर्यवसानेऽस्तुतिस्तुत्योः ॥
सहसमभिव्याहारात्सहोक्तिरुभयान्विते धर्मे ॥ ३४ ॥

---

(१) विध्यन्तरेणेति पाठोऽलङ्कारकौस्तुभे ।

यत्रान्येन विनाऽन्योऽसाधुः (१)साधुर्विनोक्तिः सा ॥
सदृशासदृशैरथैरर्थानां विनिमयस्तु परिवृत्तिः ॥ ३५ ॥
भाविकमध्यक्षं स्यात्सध्वंसप्रागभावानाम् ॥
वाक्यपदार्थत्वाभ्यां हेतूक्तिः काव्यलिङ्गं स्यात् ॥ ३६ ॥
पर्यायोक्तं कथितं वाच्यस्यैवान्यभङ्ग्योक्तिः ॥
वस्तुप्रचय उदात्तं महतामङ्गत्ववचनं च ॥ ३७ ॥
एकस्मिन् सति हेतौ हेत्वन्तरगीः समुच्चयः प्रोक्तः ॥
सदसत्सदसद्योगे गुणक्रियायौगपद्येऽन्यः ॥ ३८ ॥
एकमनेकमनेकैकस्मिन् (२)क्रमशोऽस्ति चेत्स पर्यायः ॥
अनुमानं व्याप्यबलाद्व्यापकधीर्धर्मिनिष्ठा या ॥ ३९ ॥
साभिप्रायविशेषणविन्यासे परिकरः प्रोक्तः ॥
व्याजोक्तिर्विशदीभवदर्थस्यापह्नुतिमिषतः ॥ ४० ॥
पृष्टमपृष्टं प्रोक्तं यद्भङ्ग्या वापि वाच्यं वा ॥
फलतीतरव्यपोहः परिसङ्ख्या सा तु सङ्ख्याता ॥ ४१ ॥
(३)कारणमाला प्रोक्ता पूर्वं पूर्वं यथोत्तरं हेतौ ॥
अन्योन्यं वस्तूनां परस्परोत्कर्षहेतुत्वे ॥ ४२ ॥
उत्तरमात्रात्प्रश्नोन्नयने स्यादुत्तरं नाम ॥
प्रश्ने लोकाविदितोत्तरस्य तच्चासकृत्प्रोक्तौ ॥ ४३ ॥
प्रतिभातिशयाज्ज्ञातो यद्याकारेङ्गितादर्थः ॥
विशदीक्रियतेऽन्यस्मै तथैव तत्सूक्ष्ममित्युक्तम् ॥ ४४ ॥
सारस्तु पूर्वपूर्वादुत्कर्षिण्युत्तरोत्तरे प्रोक्ते ॥
हेतुव्यधिकरणं चेत्कार्यं स्यात्सा त्वसङ्गतिः प्रोक्ता ॥ ४५ ॥
भवति समाधिः सुकरे हेत्वन्तरसमवधानतः कार्ये ॥
अन्योन्यसङ्गमार्हौ सम्बध्येते समं तत्स्यात् ॥ ४६ ॥

---

(१) सन्वेति पाठः अलंकौ०।

(२) अलङ्कारकौस्तुभे क्रमतोऽस्तीति पाठः।

(३) कारणमाला पूर्वं पूर्वं कार्ये इति पा० अलं० का०।

सम्बन्धानुपपत्ताविष्टार्थानाप्त्यनिष्टसम्प्राप्तौ ॥
जन्यजनकोभयगुणक्रियाविरोधे च विषमः स्यात् ॥४७॥
आधारस्याधेयादाधेयस्यापि वाधारात् ॥
यद्वर्ण्यते महत्त्वं तत्कथयन्त्यधिकमधिकज्ञाः ॥ ४८ ॥
आत्मापकारजनकमत्यपकारासमर्थेन ॥
तत्सम्बन्ध्यपकारे प्राज्ञतमैः प्रत्यनीकमित्युक्तम् ॥ ४९ ॥
सहजानिमित्तजधर्मात्सदृशान्येन वस्तुना वस्तु ॥
अपिधीयते यदेतन्मीलितमाहुर्विशेषज्ञाः ॥ ५० ॥
प्रथमं विशेषणं (१)चेद्विशेष्यमग्रे भवत्यसकृत् ॥
विरहप्रतियोगी वा तद्वानेकावलिः(२) सोक्ता ॥ ५१ ॥
सदृशज्ञानोद्बोधितसंस्कारभवस्मृतिः(३) स्मरणम् ॥
तदभाववति मतिस्तत्प्रकारिका भ्रान्तिमान् भवति ॥५२॥
उपमानानर्थक्यं प्रतीपमस्योपमेयत्वम् ॥
स्वगुणसजातीयगुणाश्रयैकरूप्यं तु सामान्यम् ॥ ५३ ॥
स्थितिराधाराभावे वृत्तिरनेकेषु युगपदेकस्य ॥
एककरणेन दुष्करकार्यान्तरासिद्धिरिति विशेषः ॥ ५४ ॥
परकीयगुणतिरोहितगुणस्य भानं तु तद्गुणः प्रोक्तः ॥
अन्यगुणासम्बन्धः प्रकृतस्यातद्गुणः प्रोक्तः ॥ ५५ ॥
कार्यान्तरहेतुतयान्येनाभिमताद्विरुद्धकार्यं चेत् ॥
क्रियते परेण तस्माद्व्याघातोऽयं समाख्यातः ॥ ५६ ॥
संसृष्टिस्तु परस्परमनपेक्ष(४)स्थितिरनेकस्य ॥
एकमपेक्ष्यान्यस्य प्रादुर्भावे तु सङ्करः प्रोक्तः ॥ ५७ ॥
साधकबाधकमानाभावाच्चैकस्य निर्णयाभावे ॥
एकपदाच्छब्दार्थालङ्कृत्योरवगतावन्यः ॥ ५८ ॥
रसभावतदाभासे रसवत्प्रेय ऊर्जस्वी ॥
भावशमे तु समाहितमुदयेऽन्योऽप्यस्य शबलत्वे ॥५९॥ इति ।

---

(१) यदिति पा० अलं० कौ० । (२) "ली" अलं कौ० ।
(३) 'भवा मतिः' अलं० कौ० । (४) 'अनपेक्ष्य' अलं० कौ ।

### अलङ्कारमुक्तावलीस्थविषयाणामकारादिक्रमेण

# अनुक्रमणिका।

इति ।

अथ श्रीविश्वेश्वरपण्डितरचिता

# अलङ्कारमुक्तावली ।

॥ श्रीगणेशाय नमः ॥

सन्मूलप्रकृतिः प्रकाशितशतानन्दो दधानः क्षमां
कृष्णं वापि सुमन्तुनैकगुरुताशाली नयन्पूज्यताम् ॥
सद्वृत्तिं दधदात्मभूतनयतामारुन्धते यस्य ता-
माचार्यः प्रथमो गिरां विजयते विद्वान्स लक्ष्मीधरः ॥ १ ॥

नानापक्षविभावनकुतुकमलङ्कारकौस्तुभं कृत्वा ।
सुखबोधाय शिशूनां क्रियते मुक्तावली तेषाम् ॥ २ ॥

तत्र प्रायेण सर्वालङ्काराणां गम्यसादृश्यपर्यवसायित्वेन प्राधान्यात्प्रथममुपमा व्याख्यायते ॥

तत्रैकवाक्यवाच्यं सादृश्यं भिन्नयोरुपमा ।

चन्द्र इव मुखं मुखमिव चन्द्र इत्युपमेयोपमायामतिव्याप्तिवारणाय एकेत्यादि । तत्र वाक्यद्वयसत्त्वान्न दोषः । व्यङ्ग्योपमावारणाय वाच्येति । चन्द्र इव चन्द्र इत्यनन्वयवारणाय भिन्नयोरिति । सा चेयमुपमा द्विधा । पूर्णा लुप्ता च । तत्र ज्ञानसौकर्याय पूर्णां तावद्दर्शयति—

वाचकधर्मसमत्वप्रतियोग्यनुयोगिनां ग्रहे पूर्णा ॥ १ ॥

वाचकं सादृश्यार्थक इवादिशब्दः । धर्मो रमणीयत्वादिरुपमानिमित्तम् । सादृश्यप्रतियोगी उपमानम् । सादृश्यानुयोगी उपमेयम् । एषां चतुर्णां शब्दोपात्तत्वे पूर्णोपमा ।

यथा—

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥

अत्र इवशब्दो वाचकः । सम्पृक्तत्वं धर्मः । वागर्थावुपमानम् । शि-

वावुपमेयम् इति चतुर्णां प्रयोगः। तस्या भेदानाह—

श्रौत्यार्थी सा द्विविधा वृत्तौ वाक्ये च तद्धिते तद्वत्।

वाक्ये समासे तद्धिते च प्रत्येकं श्रौती आर्थी च त्रिविधेति षड्विधा। कुत्र श्रौती कुत्र चार्थीति सौकर्यार्थमाह—

स्यादिवपदादियोगे वतौ तदर्थेऽपि सा श्रौती ॥ २ ॥

तुल्यादिकपदयोगे वतौ तदर्थेऽपि चार्थी सा।

इवादिनिपातानाम् इवार्थविहितस्य वतिप्रत्ययस्य प्रयोगे श्रौती। तुल्यादिपदानां तुल्यार्थविहितवतिप्रत्ययस्य च प्रयोगे त्वार्थी। तत्र वाक्ये श्रौती यथा "वागर्थाविव" इत्यादि। वागर्थावित्यस्य इवेन सह समासस्य अनित्यत्वादविवक्षितत्वात्।

तत्रार्थी यथा—

मुक्ताभिः सलिलरयास्तशुक्तिपेशी-
मुक्ताभिः कृतरुचि सैकतं नदीनाम् ॥
स्त्रीलोकः परिकलयाञ्चकार तुल्यं
पल्यङ्कैर्विगलितहारचारुभिः स्वैः ॥ ( मा० स० ४ श्लो० )

अत्र वाचकोपमानोपमेयधर्माणां कस्यापि न समास इति वाक्यगतत्वम्। तुल्यपदप्रयोगादार्थत्वम्।

समासे श्रौती यथा—

विद्विषद्बलनाशेन दृशां भूयस्तया तथा।
पुनरुक्त इवाभासि त्वमेव मम भूपते ॥

अत्र इवेन समासः। इवपदप्रयोगाच्छ्रौतत्वम्।

तत्रार्थी यथा—

सुकुमारतया तन्वि! मनोहरतया दृशोः।
सौरभाभ्युदयाच्च त्वं मालतीकुसुमोपमा ॥

तद्धिते श्रौती यथा—

अलौकिकमहाल्हादो ब्रह्मास्वादसहोदरः।
भुज्यते भूमिगैरेव स्वर्गवत्तव विग्रहे ॥

अत्र स्वर्गे इवेति सप्तम्यन्ताद्वतेरिति श्रौतत्वम्।

तत्रैवार्थी यथा—

अयं मदोदये हेतुर्धूनमुक्ताफलान्तरः।
चकास्ति तव कञ्जाक्षि! कुचः कुञ्जरकुम्भवत् ॥

इह कुम्भेन तुल्यमिति तुल्यार्थत्वम् । ननु व्यङ्ग्यरहितत्वमेव चित्रत्वम् । अत्रत्योदाहरणेषु च रसादिरूपं व्यङ्ग्यमस्त्येवेति कथमेषामर्थचित्रत्वमिति चेत्, मैवम् । तस्य सार्वत्रिकत्वादवर्जनीयसान्निधितया तदतिरिक्तव्यङ्ग्यविरहस्यैव चित्रत्वप्रयोजकत्वात् । वाच्यवैचित्र्यादेवात्र चमत्कारोदयात् ॥ इति षड्विधा पूर्णा ॥ धर्मश्च सर्वत्रोपमायामनुगामितया बिम्बप्रतिबिम्बभावेन वस्तुप्रतिवस्तुभावेन श्लेषेणोपचारेण समासभेदेन च निर्दिश्यत इति षडेव प्रकाराः ।

अनुगामितया यथा—

त्वया दत्तवरोदीर्णस्तारकाख्यो महासुरः ।
उपप्लवाय लोकानां धूमकेतुरिवोत्थितः ॥

दुःखहेतुत्वमुभयानुगतम् । बिम्बप्रतिबिम्बभावस्तु भिन्नयोरपि सारूप्यादेकत्वाध्यवसानम् ।

यथा—

सुरक्ष्माभृत्सारं त्रिपुरहरधन्वच्छिनदयं
शिशुः क्षत्रोच्छेदप्रथितमपि जिग्ये भृगुपतिम् ।
त्रिमूर्धप्रष्ठांश्च प्रधनभुवि नक्तञ्चरभटान्
क्षणेन प्रामथ्नाज्जरठकरहाटानिव (१)करी ॥

अत्र करिरामयोरुपमायां त्रिशिरःप्रभृतीनां करहाटानां च भिन्नानामप्यैक्यमादाय तन्मथनकर्तृत्वरूपसामान्यधर्मनिष्पत्तिः ॥ वस्तुप्रतिवस्तुभावस्तु एकस्यैव द्विरुपादानम् (२) ।

यथा—

व्यपवर्त्तत एष बालधीरः पृतनानिर्मथनात्त्वयोपहूतः ।
स्तनयित्नुरवादिभावलीनामवमर्दादिव दृप्तसिंहशावः ॥
(उत्त० अं० ५ श्लोक० ८)

अत्र सिंहशावलवयोरुपमायां बिम्बप्रतिबिम्बभावापन्नयोः पृतनागजावल्योर्विशेष्यतया निर्मथनावमर्दशब्दाभ्यामेक एव धर्म उक्तः ।

श्लेषेण यथा—

अतिपूजिततारेयं दृष्टिः श्रुतिलङ्घनक्षमा सुतनु ! ।
जिनसिद्धान्तस्थितिरिव सवासना कं न मोहयति ॥

(१) 'करहाटः शिफा कन्द' इत्यमरः ।
(२) एष च शुद्धो न सम्भवत्येव किंतु बिम्बप्रतिबिम्बभावे [illegible]

उपचारेण यथा—

अपत्ये यत्ताद्दग्दुरितमभवत्तेन महता
विषक्तस्तीव्रेण व्रणितहृदयेन व्यथयता।
पटुर्द्धारावाही नव इव चिरेणापिहि न मे
निकृन्तन्मर्माणि क्रकच इव मन्युर्विरमति॥ (उत्त०रा०अं०४श्लो०३)

अत्र मर्मकर्त्तनं मन्यौ गौणम्। समासभेदेन यथा—

कीर्त्तिः प्रवरसेनस्य प्रयाता कुमुदोज्ज्वला।
सागरस्य परं पारं कपिसेनेव सेतुना॥ (हर्ष० उ० १ श्लो०१४)

कुमुदवदुज्ज्वलेति कीर्तौ कुमुदेनोज्ज्वलेति च सेनायाम्।

लुप्तामाह—

अन्यतमस्य चतुर्णां विरहे लुप्तां वदन्त्याप्ताः॥ २॥

उपमानोपमेयवाचकधर्माणां मध्ये कस्यचिदप्रयोगे लुप्ता। सा च त्रिविधा। एकलोपे द्विलोपे त्रिलोपे चेत्यर्थः।

तद्भेदानाह—

धर्मोपमानवाचकमध्येऽन्यतमस्य लुप्तत्वे।
धर्माङ्कयोरङ्कसमयोः समधर्मयोः समान्येषाम्॥ ३॥

वाचकलोपे धर्मलोपे उपमानलोपे चेति एकलुप्तायास्त्रयो भेदाः। उत्तरार्द्धे षष्ठ्यन्तचतुष्टये लोप इत्यस्यान्वयः। धर्मवाचकयोर्वाचकोपमेययोर्धर्मोपमानयोश्च लोपात् द्विलुप्ता त्रिविधा। *समान्येषाम्*। उपमेयभिन्नानां त्रयाणामुपमानधर्मवाचकानां लोपे त्रिलुप्तैकविधेत्यर्थः।

तत्र धर्मलुप्तां त्रिविधां दर्शयति—

धर्मविलुप् श्रौत्यार्थी वाक्ये वृत्तौ च तद्धिते त्वार्थी॥

वाक्ये समासे च प्रत्येकं श्रौत्यार्थी च तद्धिते त्वार्थ्येवेति धर्मलुप्तायाः पञ्च भेदाः।

तत्र वाक्ये श्रौती धर्मलुप्ता यथा—

इह वनेषु स कौतुकवामनो मुनिरतप्त तपांसि पुरातनः।
तमिव वामवलोक्य तपस्विनौ नयनमद्य मनागुदमीमिलत्॥

अत्र वामनस्य रामलक्ष्मणयोश्चोपमायां भगवत्तादात्म्यरूपधर्मानुपादानम्।

वाक्ये आर्थी यथा मम—

राजीभिः सदृशा दृशां व्यतिकरा राजीवजानां स्रजां
वाचामाचरणस्य काचन विधा तुल्या सुधाकुल्यया।

कुम्भाभ्यां तुलितौ बलप्रतिबलस्तम्बेरमस्य स्तनौ
बर्हाणां नवरीतिरङ्ककबरी साम्यं बरीभर्त्ति ते ॥

अत्रोपमाचतुष्टयेऽपि साधारणधर्मानुपादानम्।

समासे श्रौती यथा—

द्राङ्निष्पेषविशीर्णवज्रशकलप्रत्युप्तरूढव्रण-
ग्रन्थ्युल्लासिनि भग्नमोघमघवन्मातङ्गभङ्गोद्यमे।
भर्त्तुर्नन्दनदेवताविरचितस्रग्धाम्नि भूमेः सुता
वीरश्रीरिव तस्य वक्षसि जगद्वीरस्य विश्राम्यतु ॥

इवेन समासः।

समासे आर्थी यथा—

हिमलवसदृशः श्रमोदबिन्दूनपनयता किल नूतनोढवध्वाः।
कुचकलशकिशोरकौ कथञ्चित्तरलतया तरुणेन पस्पृशाते ॥

सदृक्पदप्रयोगादार्थी यथा—

गृहीतो यः पूर्वं परिणयविधौ कङ्कणधर—
श्चिरं स्वेच्छास्पर्शैरमृतशिशिरैर्यः परिचितः।
स एवायं तस्यास्तुहिननिकरौपम्यसुभगो
मया लब्धः पाणिर्ललितलवलीपल्लवनिभः ॥

(उत्त० ना० अं० ३ श्लो० ४०)

अस्वपदविग्रहोऽत्र समास।

तद्धिते आर्थी धर्मलुप्ता यथा मम—

बिम्बाधरं बहुसुधं कनकाब्जवल्लीदेश्यां कलेवरलतां मुखमिन्दुकल्पम् ॥
वक्षोरुहद्वयमनेकपकुम्भदेशदेशीयमाकलयितु न क उत्सुकोऽस्याः ॥

नन्वीषदसमाप्तिविहिनानां कल्पबादीनां कथं सादृश्यपरत्वमिति चेत्, तस्याप्यर्थगत्या सादृश्यपर्यवसानात्; तथा च तत्र कैयटः- "सामर्थ्यादुपमानोपमेयभाव" इति। उपमानलुप्तामाह—

वाक्यसमासोभयगोपमानलोपे।

वाक्ये समासे चोपमानलोप इति द्विविधा उपमानलुप्तेत्यर्थः।

वाक्ये यथा मम—

सन्दर्भेषु कचप्रभापितृसुतभ्रातृद्वयोरप्यदृ—
श्यन्तीसत्यवतीतनूभवसुतान्तेवासिताशालिनोः।

वाचां किञ्च कणप्रभञ्जनभुजोर्निष्णातमेकान्ततः
पश्यामोऽपि न कञ्चिदञ्चति तुलां यस्यात्र लक्ष्मीधरः ॥ (१)

कचपिता बृहस्पतिः तस्य भ्रातृव्यो गोतमः। प्रभा सगरस्य राज्ञी तस्याः सुताः षष्टिसहस्रसङ्ख्याः। तेषां भ्रातृव्यो वैरी कपिलः। अदृश्यन्ती शक्तिभार्या। तत्तनूभवः पराशरः तस्य सुतो व्यासः। सत्यवतीतनूभवो व्यासस्तस्यान्तेवासी जैमिनिः। कणभुक् कणादः। प्रभञ्जनभुक् शेषः। उपमानस्य ज्ञानविषयत्वनिषेधादप्रयोगः स्पष्टः। अनन्वये त्वसत्त्वमात्रमुपमानस्याभिमतं न त्वत्रेति विशेषः।

समासे यथा—

बहुशः प्रलपन्तु वावदूकास्त्वयि सादृश्यमनेककल्प्यमाणम्।
वयमद्भुतकान्तिरूपवेषैर्भवदौपम्यनिरूपिकां न विद्मः॥

इयञ्चार्थ्यैवेति सिद्धान्तः। तत्र प्रकृतस्योपमेयत्वानुरोधेन

ऐश्वर्यादनपेतमीश्वरमयं लोकोऽर्थतः सेवते
तं गच्छन्त्यनु ये विपत्तिषु पुनस्ते तत्प्रतिष्ठाशया।
भर्तुर्विप्रलयेऽपि पूर्वसुकृतासङ्गेन निःसङ्गया
भक्त्या कार्यधुरां वहन्ति विरलास्ते दुर्लभास्त्वादृशाः॥
(मुद्रा० अं० १ श्लो० १४)

इत्यादौ त्वन्निष्ठसादृश्यप्रतियोगिनो दुर्लभा इत्यर्थाङ्गीकारे।

त्वमिव कोऽपि परापकृतौ कृती न ददृशे न च मन्मथ! शुश्रुवे।
स्वमदहो दहनाज्ज्वलतात्मना ज्वलयितुं परिरभ्य जगन्ति यः॥
(नैष० स० ४ श्लो० ९८)

इत्यादौ श्रौत्यप्युपमानलुप्ता सम्भवत्येवेति विभावनीयम्।

वाचकलुप्तां दर्शयति—

न वाक्यगाऽकलुक् ॥ ४ ॥

वाक्यपदं वाक्यतद्धितोभयपरम्। तदुभयत्र वाचकलुप्ता न सम्भवति। मुखं चन्द्रो रमणीयमित्यतः सादृश्यानवगमात्। वत्यादितद्धितप्रयोगे च तेषामेव साम्यवाचकतया वाचकलोपानुपपत्तेः। तर्हि कुत्र वाचकलुप्तेत्यत आह—

वृत्तौ कर्माधारक्यचि क्यङि स्यात् द्विधा णमुलि।

---

(१) सगरस्तस्य पुत्रोऽभूद्राजा परमधार्मिकः। द्वे भार्ये सगरस्यापि प्रभा भानुमती तथा॥ इति प्रकाय गृण्हातु वशकर्त्तार प्रभागृह्णाद्बहूस्तदा। एक भानुमती पुत्र गृह्णयादसमञ्जसम्। षष्टिष्टिसहस्राणि सुपुत्रे यादवी प्रभा इति मत्स्यपुराणे।

समासे कर्मक्यचि आधारक्यचि क्यङि कर्तृणमुलि चेति षड्भेदा इत्यर्थः।

तत्र समासे यथा—

कुवलयदलश्यामः स्निग्धः शिखण्डकमण्डनो
वटुपरिषदं पुण्यश्रीकः श्रियैव सभाजयन्॥
पुनरपि शिशुर्भूत्वा वत्सः स मे रघुनन्दनः
सपदि कुरुते दृष्ट' कोऽयं दृशोरमृताञ्जनम्॥

(उत्त० रा० अं० ४ श्लो० १९)

कुवलयदलवत् श्याम इति "उपमानानि सामान्यवचनैः"

(अ० २ पा० १ सू० ५५)

इति उपमानस्य साधारणधर्मेण समासः।

यथा वा—

पृथिव्यां किं दग्धाः प्रथितकुलजा भूमिपतयः
पतिं पापे! मौर्यं यदसि गुणहीनं वृतवती॥
प्रकृत्या वा काशप्रभवकुसुमप्रान्तचपला
पुरन्ध्रीणां प्रज्ञा पुरुषगुणविज्ञानविमुखी॥ (मु०रा०अं०२ श्लो०७)

क्वचित्त्रयाणामपि यथा(१)—

उन्मीलन्ति मृणालकोमलरुचो राजीवसंवर्त्तिका-
संवर्त्तव्रतवृत्तयः(२) कतिपये पीयूषभानोः कराः॥
अभ्यग्रैर्धवलीभवत्सु गिरिषु क्षुब्धोऽयमुन्मज्जता
विश्वेनेव तमोमयो निधिरपामह्नाय फेनायते॥

इह मृणालकोमलेतिपूर्ववत्समासः। ततो मृणालकोमला रुक् येषामित्युपमेयेन बहुव्रीहिः।

कर्मक्यचि यथा मम—

त्वदङ्गविषयस्नेहस्तिमितीकृतमानसा।
सुभग! त्वां सरोजाक्षी प्रसूनविशिखीयति॥

"उपमानादाचारे" इति कर्मणि क्यच्।

आधारक्यचि यथा—

अति स्वच्छतया तन्वि! सञ्जातप्रतिबिम्बतः।
भवत्पयोधरे कान्तो जातरूपाचलीयति॥

---

(१) त्रयाणाम् उपमानोपमेयसाधारणधर्माणां समावेश इति शेषः।
(२) "संवर्तिका नवदल" "संवर्तः प्रलयः कल्पः" इत्यमरः।

"अधिकरणाच्च" इति वार्त्तिकेन क्यच्। तत्र स्थित इव भासते इत्यर्थः। क्यङि यथा मम—

यस्मिन्नेकधनुर्भृतो भगवतः खट्वाङ्गपाणेरसा-
वाकृष्टो गुणतां गतोऽप्यहिपतिः कर्णावतंसायते॥
सम्प्राप्तश्च पुरेव भूषणपदं याति प्रकोष्ठान्तरे
काकुत्स्थेन तदेव भार्गवगुरोः कोदण्डमाकृष्यते॥

अवतंस इवाचरतीत्यर्थे "कर्त्तुः क्यङ् ( अ० ३ पा० १ सू० ११।) इति सूत्रेण क्यङ्।

कर्तृणमुलि यथा—

तन्वङ्गि! तडिदुद्योतमुद्योतन्ते त्विषस्तव।
करवालनिपातं च निपतन्ति दृगूर्मयः॥

तडिद्वदुद्योतन्ते करवालवत् निपतन्तीत्यर्थे वक्ष्यमाणसूत्रे चकारेण कर्त्तुरनुकर्षात्कर्त्तरि णमुल्।

कर्मणमुलि यथा—

उद्दिश्याराद्दशरथकुलाङ्कुरमाद्यं पतन्तं
दृष्ट्वा कुम्भं(१) मृधभुवि(२)कपिः कोऽपि मध्ये रुरोध॥
दोःस्तम्भाभ्यां सरभसमथापीड्य विक्षिप्य भूमौ
क्रान्त्वाप्येनं प्रति(३)घविवशो माषपेषं पिपेष॥

माषमिव पिपेषेत्यर्थे "उपमाने कर्मणि च ( अ० ३ पा० ४ सू० ४५ ) इतिसूत्रेण णमुल्।

इति त्रयोदशविधैकलुप्ता।

द्विलुप्तामाह—

धर्मद्योतकलुप्क्विप्ससमासयोः

धर्मवाचकलुप्तोपमा क्विप्प्रत्यये समासे चेति द्विधा।

आद्या यथा मम—

मन्मथोऽर्जुनति कार्मुकति भ्रूमावयत्यलकमञ्जरिरत्र।
अस्त्रति क्रुदिषवन्ति कटाक्षाः कर्णतीह वरवर्णिनि! कान्तः॥

अर्जुन इवाचरतीत्यादावर्थे क्विप्। उक्तं च महाभाष्ये-सर्वप्रातिपदिकेभ्य आचारे क्विबिति।

---

( १ ) मृधभुवि सङ्ग्रामभूमौ। ( २ ) प्रतिघविवश—क्रोधवश।
( ३ ) कुम्भ—कुम्भकर्णम्।

समासे यथा—

वधूवक्षोजमातङ्गकुम्भेषु विहितक्षता ।
पातु वो वृष्णिसिंहस्य रमणीया नखच्छविः ।

अत्र वृष्णिजातीयशरीरसम्बन्धाद्भगवतो वृष्णिशब्देन निर्देशः । स सिंह इवेत्युपमितसमासः । उपमेयद्योतकलुप्तामाह—

क्यचि समाजकलुप् ॥ ९ ॥

समम् उपमेयम् । अञ्जकम् इवादिपदम् । तदुभयलुप्ता क्यच्प्रत्यये भवति ।

यथा मम—

तं मनोभवमिवाभ्युपेयुषी चञ्चलाक्षि ! भवती रतीयति ।
त्वां तथा रतिमिव प्रपेदिवान् मन्मथीयति युवा स मन्महे ॥

अत्र रतिमिव मन्मथमिव स्वात्मानमाचरतीत्यर्थे क्यच् । कर्मीभूतस्यात्मन इवादेश्चाश्रवणादुभयलोपः ।

धर्मोपमानलुप्ता वृत्तौ वाक्ये ।

समासे वाक्ये च धर्मोपमानलुप्तोपमा ।

आद्या यथा—

पाञ्चाली कृष्णवर्त्मप्रथितजनिरभूद्भीमजन्मैव तावद्वैदर्भी सा विदेहप्रवरतनुभवा जानकी सर्वसिद्धा ।
लक्ष्मीर्दुग्धानुजन्मस्फुरदवमतिरप्यर्धशेषीकृतस्वप्राणेशा शैलपुत्री वरतनु ! भवतीं ब्रूमहे किंसमानाम् ॥

अत्रोपमानानुपादानं स्पष्टम् । तुलितां ब्रूमहे त्वां कया वेति पाठे वाक्यगतत्वम् । त्रिलुप्तामाह—

(१)समान्यलुप् वृत्तौ ।

उपमेयान्येषाम् उपमानधर्मवाचकानां लोपो यत्र सा उपमा समास एव न तु वाक्यादावित्यर्थः ।

यथा ममाभिरामराघवे—

मृगाक्षीवक्षोजव्यतिकरसमक्षीकृतिमिलत्प्रसूनप्रत्यग्रस्तबककमनीयः कुरबकः ।
पुरस्तादाभाति भ्रमररुतजाग्रत्कलकलः
स्फुरन्मुक्तास्थूलान् विजहदिव बाष्पाम्बुपृषतान् ॥

(१) समात् = उपमेयात् अन्येषाम् धर्मोपमानवाचकानां लुप् लोप इत्यर्थः ।

इह मृगस्याक्षिणी इव अक्षिणी यस्या इति बहुव्रीहौ प्रथमस्याक्षिपदस्य लोपः इवपदस्यार्थान्निवृत्तिः तारल्याद्यनुपादानं च स्पष्टम् ।

मालोपमेयमुक्ताप्येकस्मिंश्चेद्बहूपमानसम्बन्धः ।
सामान्यधर्मभेदाभेदाभ्यां सापि च द्वेधा ॥ ६ ॥

भिन्नसामान्यधर्मा यथा—

बुधमतिरिव बहुलोहा सुघटितचक्रा प्रभातवेलेव ।
हरमूर्त्तिरिव हसन्ती ज्वलति विधूमानलोपेता ॥

एकसामान्यधर्मा यथा—

अन्धस्य दृष्टिरिव पुष्टिरिवातुरस्य
मूर्खस्य बुद्धिरिव सिद्धिरिवालसस्य ।
स्वल्पस्मृतेर्व्यसनिनः परमेव विद्या
त्वां प्राप्य सा रतिरिवारिजने प्रनष्टा ॥

पूर्वोपमोपमेयं यत्तूपमानं परोपमायां स्यात् ॥
रशनोपमेयमुक्ता द्वैविध्यं प्राग्वदेवास्याः ॥ ७ ॥

पूर्वोपमायां यदुपमेयं तस्योत्तरोपमायामुपमानत्वे रशनोपमा । द्वितीयोपमायामुपमेयमन्यदेवेत्युपमेयोपमाऽव्यावृत्तिः । सा च द्विविधा । सामान्यधर्मभेदे तदैक्ये च ।

आद्या यथा मम —

तत्याज धीस्तरलतां गतिवद्बभाज
सूक्ष्मार्थतामपि च धीरिव वाङ्मृगाक्ष्याः ।
भूयो रसत्वमथ वागिव दृग्जगाहे
व्यङ्ग्याधिका च दृगिवाजनि मध्यभूमिः ॥

द्वितीया यथा मम—

व्योम्नीव वारिमुचि वारिमुचीव वारि
वारीव वारिरुहि वारिरुहीव चेन्दौ ॥
इन्दाविवाथ हृदये पथिकाङ्गनाना-
माविर्बभूव गतिशृङ्खलमुज्ज्वलत्वम् ॥

केचित्तु—

परिणामः क्रियार्थश्चेद्विषयी विषयात्मना ।
प्रसन्नेन दृगब्जेन वीक्षते मदिरेक्षणा ॥

अत्र दृगब्जेनेत्यत्र रूपकमनुपपन्नमेव । वीक्षणस्य प्रधानभूतपद्मा-

नुपपाद्यत्वात्। नापि दृगब्जमिवेत्युपमितसमासादुपमा। प्रसन्नेनेति सामान्यधर्मप्रयोगात्। अतो विषयिणोऽब्जस्य विषयभूतदृष्टितादात्म्यापत्त्यैव वीक्षणक्रियोपयोग इति परिणामोऽप्यलङ्कारान्तरम्। एवमिवादिशब्दैरुच्यमानः सामान्यविशेषयोरवयवावयविभाव उदाहरणम्।

यथा—

अमितगुणोऽपि पदार्थो दोषेणैकेन निन्दितो भवति।
निखिलरसायनराजो गन्धेनोग्रेण लशुन इव॥

इवशब्दः सामान्यविशेषभावप्रतिपादको निपातानामनेकार्थत्वात्। न चात्रोपमैवेति वाच्यम्। विशेष्यस्य सामान्यभेदाभावात्। तत उदाहरणमप्यलङ्कारान्तरमेवेत्याहुः।

॥ इत्युपमा॥

यत्रैकावच्छिन्ने स्तामुपमानोपमेयत्वे।
अन्यसदृशं निषेद्धुं तमनन्वयसंज्ञमाचख्युः॥ ८॥

यत्रोपमानत्वमुपमेयत्वं चैकधर्मावच्छिन्नं सोऽनन्वयः। उपमानान्तरनिषेधश्च तस्य व्यङ्ग्य इत्यर्थः॥

यथा मम—

आम्नायसम्प्रदाये वदान्यतायां विपक्षविजये च॥
उद्योतचन्द्रनृप इव राजत्युद्योतचन्द्रनृपः॥

व्यङ्ग्यो यथा—

कुले वा शौर्ये वा भुजसमुदये वा तपसि वा
बभूवुर्न प्राञ्चस्त्वमिव भवितारो न चरमे॥
अहो धिङ्मोहस्ते कथमतिचिरादेष न खलु
प्रतीचीनः पन्था दशवदन! येनासि चलितः॥

अत्रोक्तसदृशान्तरनिषेधात्तस्यैव तत्सादृश्यं व्यङ्ग्यम्।

उपमायां पूर्वस्यां प्रतियोग्यनुयोगिनौ यौ तु।
तौ विपरीतौ परतश्चेदुपमेयोपमा त्वेषा॥ ९॥

पूर्वोपमायामुपमानस्य द्वितीयस्यामुपमेयत्वं पूर्वत्रोपमेयस्य चोत्तरत्रोपमानत्वं यत्र सा उपमेयोपमेत्यर्थः।

यथा मम—

धनुरागमनिष्णाता भूयांसोऽप्यासतां नाम ।
राधेय इव किरीटी भाति किरीटीव राधेयः ॥

अत्र तृतीयोपमानव्यवच्छेदे तात्पर्यम् । सादृश्यं चात्रैकधर्मरूपम् । तेन—

सविता विधवति विधुरपि सवितरति तथा दिनन्ति यामिन्यः ।
यामिनयन्ति दिनान्यपि सुखदुःखवशीकृते मनसि ॥

इत्यादौ नातिव्याप्तिः । सुखदत्वदुःखदत्वादिधर्मभेदात् ।

सम्भाव्यते सह यदा साम्यप्रतियोगिना तदुपमेयम् ।
तामुत्प्रेक्षामाहुर्भिन्नं हेत्वादिविषयत्वात् ॥ १० ॥

उपमेये उपमानतादात्म्यसम्भावनम् उत्प्रेक्षा । सम्भावनमिति सन्देहे रूपके चातिव्याप्तिवारणाय। सन्देहालङ्कारे तुल्यकोटिकत्वेनोपमानकोटेरुत्कटत्वाभावात् । रूपके च तादात्म्यनिश्चयेन सम्भावनविरहात् । सा च त्रिधा । हेतुफलस्वरूपभेदात् ।

आद्या यथा मम—

झणदकृत कङ्कणगणो वञ्जुलविटपं विनमयन्त्याः ।
तत्किसलयातिशयितं स्वाश्रयमालक्ष्य मुदित इव ॥

अत्र वलयनिनादे हस्तकर्मजन्यपरस्पराभिघातो हेतुः । तत्र हस्तनिष्ठाशोकपल्लवापेक्षाधिकगुणशालित्वज्ञानजन्यो वलयनिष्ठप्रमोद आरोप्यते । अभिघातस्य च प्रयोगविरहात्साध्यवसानत्वम् । रसगङ्गाधरादिरीत्या तु वलय एव समवायसम्बन्धेन प्रमोदारोप इति विशेषः । न चाद्ये वलयनिष्ठप्रमोदस्यालीकत्वादारोप्यमप्रसिद्धमिति वाच्यम् । कविकल्पितत्वेन तदभावात् । काव्यमार्गे अरोप्यस्य लोकसिद्धत्वानपेक्षणात् ।

द्वितीया यथा मम—

स्वव्यापारनिर्वाहिनै रिपुगणैर्निर्भेद्य बिम्बं रवे—
रङ्कं चाप्यपहाय वृत्रमथितुः सिंहासनस्याञ्जसा ॥
निर्मथ्याप्यमरावतीं बहुमहावीरोपरुद्धान्तरां
बाणस्ते धरणीतलं विशति किं तातं दिदृक्षुर्बलिम् ॥

अत्र बाणधरणीतलप्रवेशस्य तत्संयोगफलत्वेऽपि बलिदर्शनस्य तत्फलत्वमुत्प्रेक्षितम् ।

तृतीया यथा—

यन्मौलिरत्नमुदिनासि स एष जम्बू—
द्वीपस्त्वदर्थमिलितैर्युवभिर्विभाति ॥
दोलायितेन बहुना भवभीतिकम्प्रः
कन्दर्पलोक इव खात्पतितस्त्रुटित्वा ॥
[ नैष० स० ११ श्लो० ८३ ]

जम्बूद्वीपे कन्दर्पलोकतादात्म्यं सम्भावितम्। हेतुफलोत्प्रेक्षयोः स्वरूपोत्प्रेक्षाभेदस्त्वत्र स्वरूपपदस्य हेतुफलातिरिक्तपरत्वादिति प्राञ्चः।

प्रकृते तदन्यविषया सादृश्यज्ञानजन्या या।
बुद्धिर्निश्चयभिन्ना तामाचख्युः ससन्देहाम् ॥ ११ ॥

उपमेय उपमानविषयिणी सादृश्यज्ञानमूला निश्चयान्या च बुद्धिः ससन्देहः। स्थाणुर्न वेत्यादिसंशयवारणाय उपमेयेति।

अमुष्य धीरस्य जयाय साहसी
तदा खलु ज्यां विशिखैः सनाथयन्।
निमज्जयामास यशांसि संशये
स्मरस्त्रिलोकीविजयार्जितान्यपि ॥ [ नैष० स० १ श्लो० ४५ ]

इत्यादिवारणाय सादृश्येति। रूपकेऽतिव्याप्तिवारणाय निश्चयभिन्नेति। अस्य भेदद्वयमाह—

उक्ते विशेषधर्मे प्रकृतस्य भवेदनुक्ते च ॥

स्पष्टम्। विशेषधर्मोक्तावपि निश्चयान्तनिश्चयगर्भताभेदाद्द्वैविध्यम्। यत्र संशयोक्तौ प्रकृतव्याप्यविशेषधर्मदर्शनात्संशयनिवृत्तिस्तत्राद्यः।

यथा मम—

पीयूषद्युतिमणिशालभञ्जिका वा
किं प्रेयोविरहितमत्तकाशिनीति(१)।
सन्देहेऽभ्युदयति निश्चिकाय शोभा-
द्वारीणां स्तनशिखरे निपातुकानाम् ॥

अत्र वारिशोषात्तापवत्त्वं तेन च मणिपुत्रिकाव्यावृत्ततया विरहिणीधर्मत्वज्ञानात्प्रकृतनिर्णयः।

द्वितीया यथा मम—

किं विद्युन्मुदिराविमौ न भुवि तौ किं हेमवीरुन्महा—

(१) वरारोहा मत्तकाशिनीत्यमरः।

तापिच्छौ न गतिस्तयोः स्वरसतः किं वा प्रवाहावुभौ ।
जम्बूशैवलिनीकलिन्दसुतयोस्तौ भिन्नदेशाविति
श्रीरामं सह सीतया कलयतां प्राप स्थितिं द्वापरः(१) ॥

अत्र तत्कोट्यभावव्याप्यदर्शनेन तत्कोटिकसंशयनिवृत्तावपि प्रकृतनिर्णयसामग्र्यभावात्कोट्यन्तरमादाय पुनः संशयः, प्रकृतनिर्णयस्तु व्यङ्ग्य इत्युद्भटभट्टादिभिरयमेवोद्भावितः ।

विशेषधर्मानुक्तौ यथा मम--

चके किं त्रसरेणुभिः सुमनसामामोदिभिः किं हिमैः
पीयूषस्य किमु स्मरस्य रुचिरैरित्येवमेणीदृशः ॥
किं तीक्ष्णैस्तरणेर्दृढैरुत पवेः किं सांयुगीनै(२) रघु-
श्रेष्ठस्येत्यभिमातयो नृपवर ! त्वां वीक्ष्य संशेरते ॥

अत्र सौरभादिभिरुपपादकैः पुष्पत्रसरेणव एतत्समवायिनो वा इत्यादिः सन्देहो नायिकानिष्ठः तन्निवर्त्तकविशेषधर्मानभिधानं च । एवं तीक्ष्णत्वादिभिरुपपादकैः सूर्यत्रसरेणव एतत्समवायिनो न वेत्यादिविपक्षनिष्ठोऽपि ।

तद्रूपकं त्वभेदः स्यादुपमानोपमेययोर्यत्र ॥ १२ ॥

उपमानोपमेययोराहार्यतादात्म्यनिश्चयो रूपकम् । ह्रदो वह्निमानित्यादिवारणाय उपमानेति । भ्रान्तिमद्वारणाय आहार्येति । भेदज्ञानसमानकालिक इत्यर्थः । उत्प्रेक्षासन्देहवारणाय निश्चय इति । उद्देश्यविधेयभावेन तदुभयतादात्म्यबोधस्य लाभादतिशयोक्तावपह्नुतौ च न व्यभिचारः । अतिशयोक्तावुपमेयवाचकपदविरहात् अपह्नुतौ चोपमेयनिषेधात् । नच समासगतरूपकेऽव्याप्तिः । समासे उद्देश्यविधेयभावेनान्वयबोधविरहादिति वाच्यम् । उपमानतावच्छेदकस्योपमेयतावच्छेदकसामानाधिकरण्यप्रतीतेरेव विवक्षितत्वात् ।

आरोप्याः शाब्दाश्चेत्कथयान्ति समस्तवस्तुविषयं तत् ॥

यस्मिन्नारोप्यते यच्चारोप्यते तयोः शब्देनाभिधानं यत्र, तद्रूपकं समस्तुविषयम् ।

यथा--

प्रागुच्चैः शिरसं क्षुरप्रनखरैः क्रौञ्चाद्रिदन्तावलं
भित्त्वा हंसमयानि मौक्तिकफलान्याकीर्य पर्यापिताम्॥

---

( १ ) सन्देहद्वापरौ चाथ इत्यमर ।
( २ ) सांयुगीनो रणे साधुरित्यमरः

सैंहीं वृत्तिमधिष्ठितेऽपि हि मयि क्षात्त्रेण वीर्येण ते
दिष्ट्या कौतुकमाभिरामिकमसि त्वं कोऽपि वीराङ्कुरः ॥

अत्र क्षुरप्रादीनां नखरादीनां च शाब्दमुपादानम् । नच नखरसदृशैः क्षुरप्रैरित्यादिरीत्या उपमितसमासं कृत्वा उपमैवेयं स्यादिति वाच्यम् । "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" (अ०२ पा०१ सू०५६) इति वचनेन साधारणधर्मानुपादान एव तत्समासविधानात् । अत्रोच्चैःशिरसमिति सामान्यधर्मप्रयोगसत्त्वात् । क्रौञ्चाद्रिदन्तावलमित्यत्र तत्समासानुपपत्त्या क्रौञ्चाद्रिरेव दन्तावल इति समासस्यैव वाच्यत्वात् । तदनुरोधेन क्षुरप्रनखरैरित्यादावपि रूपकस्यैव निर्णयात् । अन्यथा रूपके दन्तावलपदार्थप्राधान्ये उपमायां च क्षुरप्रादिपदार्थप्राधान्येऽर्थासङ्गतिप्रसङ्गात् ।

एकदेशविवर्त्ति तच्छ्रौतार्थत्वे तु साङ्गे द्वे ॥ १३ ॥

केषांचिदारोप्यमाणानां शाब्दत्वे केषांचिच्चार्थगम्यत्वे एकदेशविवर्त्तिरूपकम् । पूर्वोक्त समस्तवस्तुविषयैकदेशविवर्त्तिरूपकद्वयं च सावयवम् इत्युच्यते इत्यर्थः ।

यथा—

किरति कलितकिञ्चित्कोपरज्यन्मुखश्री-
रविरतगुणगुञ्जत्कोटिना कार्मुकेण ॥
समरशिरसि चञ्चत्पञ्चचूडश्चमूना-
मुपरि शरतुषारं कोऽप्ययं वीरपोतः ॥ ( उत्तररा० अं० ५ श्लो० २ )

अत्र शरेषु तुषारारोपेण चमूनां तन्नाश्यतया नलिनीत्वारोपासिद्धिः ।

अनुकूलतया यथा—

नाराचैः कृतवीर्यनन्दनवधूबाष्पप्रियम्भावुकै-
रुत्पाद्य क्षतजोदमर्णवमथ न्युप्तं पितृभ्यां पयः ॥
सम्प्रत्यस्य समस्तबाहुजभुजक्रोधस्य निर्वासयतः
क्षुन्दानो धनुरिन्दुशेखरमहो जातो भवानिन्धनम् ॥

अत्र रामे इन्धनत्वारोपेण क्रोधस्याग्नितादात्म्यमाक्षिप्यते । बहूनामारोपाणामेकारोपाक्षेपकत्वम्—

यथा मम—

गुलुच्छौ वक्षोजौ हसितमसिताब्जाक्षि ! कुसुमं
प्रकाण्डौ बाहू द्वावपि दशनवासः किसलयम् ॥
तनुश्रीरावाल किमपि सुकृतं बीजमतुल

प्रमोदस्याद्वैतं फलमुपभुजिर्वल्लभगता ॥

अत्र रूपकान्तरैरौचित्यवशान्नायिकाया लतातादात्म्यं गम्यते ।

निरवयवं तु तदुक्तं यद्येकारोपसाधकं नान्यत् ।

यत्र कचित्कस्यचिदारोपमात्रं न त्वारोपोपपादकत्वं तन्निरवयवम् ।

यथा--

इयं गेहे लक्ष्मीरियममृतवर्त्तिर्नयनो-
रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः ॥
अयं कण्ठे बाहुः शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥ [उत्त० अं० १ श्लो० ३८]

अत्र परस्परानपेक्षा एवारोपाः ।

मालारूपकमुक्तं त्वेकस्मिन्भूयसां यदारोपः ॥ १४ ॥

यथा-

नेत्राणां मधुपर्कपात्रमुदधेः सर्वाङ्गमेदस्करः
शृङ्गारस्य रसायनं मखभुजां पीयूषगञ्जापतिः ॥(१)
देवः किं स्तुमहे महेश्वरशिरोनेपथ्यरत्नाङ्कुरः
क्षीरोदार्णवशुक्तिमौक्तिकमयं दाक्षायणीनायकः ॥

अत्रैकस्मिंश्चन्द्रे बहूनामारोपः ।

अन्यारोपाभावप्रयोजकस्य त्वभावस्य ।
प्रतियोगी परकीयारोपो यस्तत्परम्परितम् ॥ १५ ॥

यदारोपं विना आरोपान्तरं न निर्वहति तत्परम्परितरूपकम् ।

यथा--

दशमुखवधनाट्यसूत्रधारो
रघुपतिरस्य च पारिपार्श्वकोऽहम् ।
प्रकरणफलबीजभावकाना-
ममृतभुजां समुपास्महे समाजम् ॥

अत्र रघुपतौ सूत्रधारारोपः सुग्रीवे पारिपार्श्विकारोपनिर्वाहकः । नाट्यरूपैककार्यकारित्वेन तत्सिद्धेः । यदि च नाट्यप्रयोगकर्तृत्वरूपधर्म एव रूपकद्वयनिर्वाहकः । अतो दशमुखवधनाट्यरूपकमेवोभयसिद्धिहेतुर्नतु सूत्रधारारोपः पारिपार्श्वकारोपनिर्वाहको मानाभावादिति विभाव्यते । तदा तदेवादाय दृष्टान्तत्वमभ्याहतम् ।

---

(१) गञ्जा तु मदिरागृहम् इत्यमरः ।

तच्च श्लेषभिदाभ्यामारोपानिमित्तशब्दस्य ॥ १४ ॥

आरोपान्तरनिर्वाहहेतावारोपे विषयविषयिवाचकपदयोर्भेदे एवेत्यर्थः।

तत्राद्यमुदाहृतम् । तदेव मालारूपम्—

यथा मम—

चेतोजन्मशिखण्डिताण्डवकलाकादम्बिनीकूजितं
शृङ्गाराद्वयरूपरूपकविधिप्रारम्भनान्दीस्वनः ॥
सञ्जिन्वन्किलकिञ्चितक्रतुकृते याज्यारवप्राज्यतां
कामं जीवतु खञ्जरीटनयनामञ्जीरजन्मा ध्वनिः ॥

द्वितीयं यथा—

आदाय दण्डं सकलासु दिक्षु योऽयं परिभ्राम्यति भानुभिक्षुः ।
अब्धौ निमज्जन्नुपरीव सोऽयं सन्ध्याभ्रकाषायमधत्त सायम् ॥

दण्डपदोपात्तयोः सूर्यानुचरविशेषवेणुयष्ट्योरभेदारोपो भानुभिक्षुरूपकनिर्वाहकः ।

खण्डश्लेषो यथा मम—

मृदुतामृदितमृणालीमदभारा मुदिरमेदुराभकचा ।
बीजं मञ्जुलताया मुदमासञ्जयति कञ्जाक्षी ॥

मञ्जुः सुन्दरी लता । वल्लीत्वारोपो नायिकायां बीजारोपे मूलम् ।

अखण्डश्लेषे मालारूपं परम्परितम्—

यथा मम—

आमोदकुरबकवनी माधुर्यसुधारसैकपुष्करिणी ।
मकरध्वजैकराकारजनी वरवर्णिनी वरीवर्त्ति ॥

खण्डश्लेषे तदेव—

यथा मम—

(१)रसोद्धरणनिर्मितिस्मरवराहदंष्ट्रा द्विष-
त्कुरङ्गनयनोत्करे कररुहस्य रेखा हरेः ।
नवस्तनघनोदये बलभिदो धनुर्मञ्जरी
मृगाक्षि ! तव पाणिजक्षतिरुदीक्ष्यते वक्षसि ॥

विरोधितया उपपाद्योपपादकभावो यथा—

दर्पोऽयं भवतः सुरासुरचमूदोःकाण्डकण्डूविष-
ज्वालाजाङ्गलिकेन जाङ्गलभुजां पत्यापि न त्याजितः ।

---

(१) रसा=पृथ्वी । रस =शृङ्गार । द्विषत्कुरङ्गनयना =सपत्नी । हरेः=सिंहस्य । बलभिदः=इन्द्रस्य

येनैन्द्रे रथवर्मणी रघुशिशोरस्योपनीते त्वया
राजद्विष्टमिदं विधाय स कथं शक्रोऽपि वर्त्तिष्यते॥

अत्र कण्डूविषयकविषज्वालारोपस्तदपनायकतया रावणे भिषग्वैद्यारोपनिमित्तम्। शुद्धसावयवयोः सङ्करो—

यथा ममाभिराघवे—

उन्मीलद्बलभिच्चमूकमलिनीनिर्मन्थगन्धद्विपो
व्यूहानामभितो निशाचरपतेर्वज्रात्मकः पञ्जरः।
अत्युच्चैरमरावतीनवलताकम्पप्रचण्डानिलो
वीरो दिग्द्विरदेन्द्रकुम्भदलनव्यापारकण्ठीरवः॥

विषमपादद्वये सावयवं, समपादद्वये च शुद्धम्। खण्डश्लेषमूलकसावयवसङ्करो यथा तत्रैव—

पारावारतुषारबिन्दुचुलुकीकारप्रवालाधरो
विन्ध्यक्ष्माधरगात्रवैकृतकरक्रोधैनसो निष्कृतिः॥
तेजःप्रज्वलदिल्वलावृतिविधिप्रत्यग्रधाराधरो
ब्रह्मर्षिर्यमुनाग्रजप्रियहरित्सीमन्तचूडामणिः।

इल्वलो दैत्यविशेषस्तस्या वृतिरेव इल्वलानां ताराविशेषाणामावृतिरिति वाचकं श्लिष्टम्। अन्यत्र वाचकभेदः।

परम्परितैकदेशविवर्त्तिसङ्करो यथा—

आपन्नवत्सल! जगज्जननैकबन्धो!
विद्वन्मरालकमलाकर! रामचन्द्र!।
जन्मादिधर्मविधुरैः सुमनश्चकोरै-
राचम्यतां तव यशः शरदां सहस्रम्॥

केचित्तु—

क्रमिकं प्रकृतार्थानां न्यासं रत्नावलीं विदुः।
चतुरास्य' पतिर्लक्ष्म्याः सर्वज्ञस्त्वं महीपते!॥

ब्रह्मविष्णुशिवानां श्लेषेण क्रमादुपन्यासाद्रत्नावली अलङ्कारान्तरमित्याहुः।

**प्रकृतं निषिध्य भिन्नात्मतया प्रोक्तावपह्नुतिः कथिता।**

उपमेयं निषिध्य तत्रोपमानाभेदव्यवस्थापनमपह्नुतिः। निषेधश्च द्विविधः। शाब्द आर्थश्च।

शाब्दो यथा—

पात्रं करालगरगर्भितमेव सत्यं
नैवेन्दुबिम्बमिदमालि ! यतश्चिराय ।
उत्कण्ठते मम मनः शिवकण्ठमेव
यत्कालकूटगरलादखिलं ररक्ष ॥

सावयवा यथा—

नेयं निशा हतनिशाचरयोषिदेव
हन्तुं वियोगविधुरं जनमाजगाम ।
अस्या मुखे सपदि यः प्रपतन् प्रकामं
रागः स कोपजनितो न तु सान्ध्यरागः ॥
अत्र सान्ध्यरागापह्नवो निशापह्नवानुग्राहकः ।

आर्थो यथा—

येन स्वां विनिहत्य मातरमपि क्षत्रास्रमध्वासव-
स्वादाभिज्ञपरस्वधेन विदधे निःक्षत्रिया मेदिनी ।
यद्बाणव्रणवर्त्मना शिखरिणः क्रौञ्चस्य हंसच्छला-
दद्याप्यस्थिकणाः पतन्ति स पुनः क्रुद्धो मुनिर्भार्गवः ॥
छलशब्दसमभिव्याहारेण हंसानां निषेधबुद्धिः ।

उभयविशेष्यान्वितयोरेकेन प्रोक्तिरर्थयोः श्लेषः ॥ १९ ॥

उभयपदमेकभिन्नपरम् । त्रिविधश्चायम् । द्वयोः प्रकृतत्वे द्वयोरप्रकृतत्वेऽन्यतरस्यैव प्रकृतत्वे चेति । पुनर्द्विविधः । शब्दश्लेषोऽर्थश्लेषश्चेति । शब्दश्लेषोऽपि द्विविधः । पदभेदे तदैक्ये च । आद्यः खण्डश्लेष इति गीयते । तत्र शब्दश्लेषः शब्दालङ्कारोऽर्थश्लेषस्त्वर्थालङ्कार इति काव्यप्रदीपः । द्वयमपि शब्दालङ्कार इति केचित् । द्वयमपि अर्थालङ्कार इति अलङ्कारसर्वस्वकारः । दीक्षिताद्यभिनवसम्मतं चैतदित्यन्यत्र विस्तरः ।

द्वयोः प्रकृतत्वे यथा—

(१)अकम्पनोद्दीपितमेघनादा प्रहस्तनाथा दृढचित्रकाया ।
आविर्भवद्वैरनरान्तकोग्रा सामर्षवेगोज्ज्वललोहिताक्षा ॥

---

(१) अकम्पन उद्दीपित =क्रुद्धो मेघनाद इन्द्रजिद्यस्यां पक्षे अकम्पनातिच्छेदः । उद्दीपितमेघनादा=प्रवृद्धसिंहनादा । प्रहस्त=तन्नामा निशाचरो नाथो यस्यां पक्षे प्रकृष्टा हस्ताः येषा क्षिप्रहस्ता बाहुबलशालिनो वा तादृशा नाथा सेनानायका यस्याम् । दृढो बलवान् चित्रकायस्तन्नामा राक्षसो यस्याम् । पक्षे दृढ=अभेद्यो विचित्रो

ससिन्धुराजा तरसोग्रभीष्मा सहेतिशल्या कृतवर्मनिष्ठा ।
समिन्महाकर्मसु दक्षिणा च रुरोध शत्रून् परवाहिनी सा ॥

अत्र वर्ण्यतया रावणदुर्योधनसेनाद्वयस्य प्रकृतत्वम् ।

द्वयोरप्रकृतत्वे यथा मम--

(१)संपन्नशक्तिर्विबुधेन्द्रवृन्दमुखप्रयायी विलसच्छिखावान् ।
त्वयानुभावेन विलक्षणेन जितः कृशानुश्च कृशानुभूश्च ॥

राजस्तुतौ वह्निस्कन्दयोर्द्वयोरप्रकृतत्वम् ।

अन्यतरस्य प्रकृतत्वे यथा मम--

तात्पर्यमकलयन्तो नालोचितविशदभाष्यगिरः ।
अपरिचितदीधितिमहालोका न्यायाद्बहिः प्रजल्पन्ति ॥

तात्पर्यानभिज्ञा आपातरम्योक्तयः क्रूरसुकुमारोक्तिप्रस्तावज्ञानहीना लोका अन्याय्यमेवार्थं वदन्तीति प्रकृतः । तात्पर्यटीकाभाष्य-शिरोमणि-मिश्रग्रन्थानभिज्ञा न्यायशास्त्रविरुद्धमेव वदन्तीत्यप्रकृतः । खण्डश्लेषस्त्वष्टधा ।

तत्र वर्णश्लेषो यथा--

यामि विधावभ्युदिते पुनरेष्यामीति यत्त्वया कथितम् ।
जानात्युदन्तमात्रं नेदं तत्त्वेन मुग्धवधूः ॥

विधाविति सप्तम्येकवचने विधिविधुशब्दयोः समानम् ।

पदश्लेषो यथा--

तमभ्यधावत्क्षतशत्रुरक्षो-
घटोत्कचस्फीतविटङ्कमौलिः ॥
चलाचलाकारकरीन्द्रपाली
कुम्भप्रणुन्नाऽम्बुदसहतिश्रीः ॥

अत्र रामायणपक्षे क्षतशत्रु यथा स्यात्तथा कुम्भसंज्ञेन कुम्भकर्णपुत्रेण प्रेषिता रक्षसां घटा राक्षससमूहः तं सुग्रीवमभ्यधावत् । किंभू-

---

व्यूहो यत्र । नरान्तको राक्षसविशेषः पक्षे अन्तकोऽग्रेति पृथक्पदम् । अक्षो रावणसूनु पक्षे. कोपावेशाद्रक्तनेत्रवती । ससिन्धुरा=सगजा जातवीररसेनातिभयङ्करा । पक्षे सिन्धुराजो जयद्रथ । तरसा=बलेन उग्रो भीष्मो यस्याम् । हेतय.=शस्त्राणि--शल्यानि=भल्लानि शस्त्रसहित शल्यो राजविशेषो यस्यामिति च । सकवचा । पद्ये स्पष्टम् ।

( १ ) शक्ति =दाहकत्वरूपा आयुधविशेषश्च । देववृन्दस्य मुख वदनं प्रयायी गतिमान् "अग्निमुखा वै देवा" इति श्रुतेः । मुखे अग्रे प्रयायी सेनानीरिति यावत् : विलसन्ती शिखा ज्वाला तद्वान् विलसन् शिखावान् मयूरो यस्य । तद्वाहनत्वात्तस्य ।

ता उद्गताः कचाः केशा यत्र तादृशः स्फीतो विशालश्च विटङ्कसदृशो मौलिर्यस्याः। तथा मेघवन्नीलवर्णा चलत्पर्वताकारा गजपङ्क्तिरभ्यधावदिति व्याख्यातारः। भारतपक्षे तु क्षता शत्रूणां रक्षा येन तादृशो घटोत्कचनामा राक्षसस्तं कर्णमभ्यधावत्। स्फीतेत्यादितुल्योऽर्थः। "खर्परे शरि" इति विसर्गलोपमाश्रित्य घटोत्कचशब्दस्य प्रथमान्तत्वम्। करीन्द्रपालीनां कुम्भैर्गण्डस्थलैः प्रणुन्ना उत्तम्भिता मेघानां संहतिश्रीः समुदायशोभा येन। गजानुत्क्षिप्य युध्यन्तीत्यर्थः।

लिङ्गश्लेषो यथा—

प्रवर्त्तयन्मान्द्यनिवारणेन कर्मण्यभीष्टप्रतिपत्तिहेतौ।
उद्भास्वरप्राज्यमहोतिमात्रं मित्रं च मित्रश्च मुदं सुवाते॥

"यरोऽनुनासिके" (८।४।४५) इति नत्वे कृते प्रवर्त्तयदिति क्लीबस्य नकारान्तसाम्यम्। उद्भास्वरः=परप्रकाशकः प्राज्यो=भूयान्महस्तेजो यस्य। तेजोऽर्थकमहशब्दस्याप्यदन्तत्वात्। पक्षे उद्भास्वरं प्राज्यं मह उत्सवो यस्मात्। सुहृदुपदेशानतिक्रमे सुखाभ्युदयात्। सकारान्तमहःशब्दस्याप्युत्सवार्थकत्वात्। "मह उत्सवतेजसोः" इतिहकारान्तेषु "महो भवेदुत्सवतेजसोश्च" इति सान्तेषु च विश्वः।

भाषाश्लेषो यथा मम—

सरसं तरसा रमणो रहस्समम्महसरेण।
अह वासराजवासे सुहसा राजन्ति वामा हि॥

इह संस्कृतपक्षे वासराजो=गृहश्रेष्ठः क्रीडागृहं तत्र वासे सुहसाः शोभनहासा वामाः स्त्रियो राजन्ति शोभन्ते। हीत्यवधारणे। अहेति पादपूरणे। सरसमिति क्रियाविशेषणम्। यद्वा रह इत्यस्य विशेषणम्। कदा शोभन्त इत्यत आह—मह उत्सवः तस्य सरो विस्तारः। सृगताविस्यस्मादप्प्रत्ययः। तेन समं सह। सस्वेदः कामविकारवत्त्वात्। अनेन विप्रलम्भसाहित्यं प्रतिपादितम्। दुःखसम्मिन्नरतेरेव तत्स्वरूपत्वात्। उक्तञ्च—

"सम्भोगः सुखसम्भिन्नो विप्रलम्भस्तु दुःखयुक्।
रतिस्तयोः प्रकर्षः स्यादुत्कर्षात्सुखदुःखयोः"॥

एवंविधो रमणो नायकः रह एकान्तदेशश्च यदि भवति तदा सम्भोगसामग्रीसाम्राज्यादिति भावः। प्राकृतपक्षे तु—

सरसांतरसारमनोरथस्य मन्मथशरेण।
अथ वासरा अवाप्तस्य सुखसारा यन्ति वामाभिः॥

विरहे कथं तस्य दिनानि गच्छन्तीत्याशङ्कायां कस्याप्युक्तिः। मनोरथोपनीताः प्रियाः साक्षात्कृत्य तत्परिशीलनयैव सुखं दिनानि यान्तीत्यर्थः।

प्रकृतिश्लेषो यथा मम—

तिरस्कृताम्भोभृदहङ्कृतीनां धृतोत्कटत्वप्रवहत्कटानाम्।
स्वेषां परेषामपि वारणानां तनोति पाणिस्तव दानमेव॥

"दो अवखण्डने" इत्यस्य "डुदाञ् दाने" इत्यस्य च ल्युट्प्रत्यये दानमिति रूपं तुल्यम्।

प्रत्ययश्लेषो यथा मम—

वीरव्रतदीक्षायां निरूपयत्यनवकीर्णिनं हृदये।
भूतलपुरुहूत! त्वं केवलमचकाच्च गाङ्गेयः॥

अचकादिति चकास्तेर्लङि प्रथममध्यमपुरुषैकवचने समानं रूपम्।

विभक्तिश्लेषो यथा मम—

तात्पर्यविषयभावं त्वमश्व एव श्रुतिशतानाम्।
शिरसामहोविशेषादसन्मतेः सम्यगुद्धर्त्तुम्॥

श्रुतिशतानां शिरसामुपनिषदां तात्पर्यविषयत्वं त्वमेव अश्वः प्राप्तवान्। अवान्तरवाक्यानामन्यत्रापि तात्पर्यमाशङ्क्याह-विशेषादित्यादि। वेदार्थानभिज्ञैरेवान्यत्र तात्पर्यमाशङ्क्यते इत्यर्थः। अथ च शिरसा मुखावच्छेदेन अश्वो हयग्रीव इति यावत्। ईदृशस्त्वमेव वेदशतानां दुर्बुद्धियुक्तान्मधुकैटभादेः सकाशात्सम्यगुद्धारं कर्तुं तात्पर्यस्य विषयभावम्=आश्रयतां विशेषात्=देवान्तरव्यतिरेकेण अमहः पूजितवान्। 'मह पूजाया'मित्यस्य लङि मध्यमैकवचने रूपम्। अत्राश्व इति श्वयतेर्धातोर्गत्यर्थस्य लुङि मध्यमैकवचनम्, अश्वशब्दस्य प्रथमैकवचनं च समानम्।

वचनश्लेषो यथा—

अपयातमितो धृष्टे धिग्वामशीलशीलताम्।
इत्युक्ते वेत्रवन्तश्च व्यतियाते स्म ते भिया॥

अत्र ते सख्यौ ते कञ्चुकिनश्च व्यतियाते इति कर्मव्यतिहारे तङ्। यथाक्रमं द्विवचनान्तं रूपम् बहुवचनान्त च समानम्।

यत्र प्रकारवाचकपदमात्रं व्यङ्ग्यं वाच्यसामान्यम्।
तच्छक्तेरप्रकृतार्थोक्तिःसोक्ता समासोक्तिः॥ १६॥

यत्र विशेषणपदानां प्रकृताप्रकृतसाधारणार्थप्रत्यायकत्वं न तु विशेष्यपदस्यापि सा समासोक्तिः। साधारणार्थबलादप्रकृतार्थस्यापि प्रतीतेः।

यथा मम—

मुकुलेषु कमलिनीनां पतन्ति भास्वत्करा बहलरागाः।
प्रथममतितीक्ष्णस्पर्शात्सुमुखि! तदुद्वेगभीत्येव॥

अत्र नवीननायिकाकुचे पूर्वं तद्विश्वासाय शिथिलस्पर्शस्य कर्त्तुर्नायकस्य व्यवहारस्य प्रत्ययः। यत्र तु विशेष्यवाचि पदमपि श्लिष्टं तत्रोपमाध्वनिरेव। अयं त्विह विशेषः। सर्वस्वकारादीनां मते समासोक्तौ प्रकृतव्यवहारे अप्रकृतव्यवहारतादात्म्यमेव भासते न तु प्रकृतधर्मिण्यप्रकृतधर्मितादात्म्यमपि। यथा प्रकृते सूर्यव्यवहारे नायकव्यवहाराभेदो न तु सूर्यनायकाभेदः। कमलिन्यादौ नायिकादितादात्म्यं तु प्रतीयत एवेति। रसगङ्गाधरादीनां तु प्रकृतधर्मिण्यप्रकृतधर्मितादात्म्यमपि भासत इति।

उपमापर्यवसन्नो यत्रार्थोऽन्योन्यमन्वयानर्हः।
यच्च क्रियया कारणकार्यान्वयधीर्निदर्शना सोक्ता॥१७॥

यत्र पदार्थयोर्वाक्यार्थयोर्वा सम्बन्धो बाधवशात्सादृश्ये पर्यवस्यति सा तावदेका निदर्शना।

यथा—

दर्पेण कौतुकवतामपि बद्धलक्ष्यः
पश्चाद्बलैरनुसृतोऽयमुदीर्णधन्वा।
द्वेधा समुद्धतमरुत्तरलस्य धत्ते
मेघस्य माघवतचापधरस्य लक्ष्मीम्॥

यथा वा—

चूडामण्डलबन्धनं तरलयत्याकूतजो वेपथुः
किंचित्कोकनदच्छदस्य सदृशे नेत्रे स्वयं रज्यतः॥
धत्ते कान्तिमकाण्डताण्डवितयोर्भङ्गेन वक्रं भ्रुवो-
श्चन्द्रस्योत्स्फुरलाञ्छनस्य कमलस्योद्भ्रान्तभृङ्गस्य च॥

अन्यधर्मं कथमन्यो वहतीति धर्मिणोः सादृश्यपर्यवसानम्। वाक्यार्थनिदर्शना तु सदृशवाक्यार्थयोरभेदारोपः।

यथा मम रुक्मिणीपरिणये--

पद्मिन्याः परिरक्षणाय तुहिनैर्मूलावसंकांक्षिया
स्पष्टं यामिकताकृतिर्मृगपतेः केलीमृगीं गोपितुम् ।
कोशीयस्य धनस्य च स्वकृतिभिः पाटच्चरायार्पणं
मञ्जर्या अतिसौरभस्य रभसात्पाणौ प्रदानं कपेः ॥

अत्र दुर्मुखसंज्ञस्य मायया हंसरूपिणो दैत्यस्य श्रीकृष्णेन रुक्मिणीं प्रति दूत्येन प्रेषणम् । अहो तदेतदिति पूर्ववाक्यार्थः । अत्रोक्तवाक्यार्थचतुष्टयस्याभेदारोपः ।

अप्रसिद्ध आरोप्यवाक्यार्थो यथा--

उल्लास्यतां स्पृष्टनलाङ्गमङ्ग
तासां नलच्छायपिबापि दृष्टिः ।
अश्मैव रत्यास्तदनर्चि पत्या
च्छेदेऽप्यबोध यदहर्षि लोम ॥ ( नैष० स० ६।३४ श्लो० )

समासरूपवाक्यार्थस्य यथा--

चतुरिमकलाकण्ठच्छेदो मनोभववञ्चनं
दृषदि मधुनो लिप्सा लोके विडम्बनमात्मनः ।
उपरि परितः सङ्कल्पानां शिलाशतपातन
सहचरि ! परीतापस्थानं जडे हृदयार्पणम् ॥

आद्यचरणोपात्तं समासरूपवाक्यचतुष्टयम् । यत्र क्रियया कार्यकारणभावे कयोश्चिदर्थयोः प्रतिपादिते उत्तरवाक्यार्थो विशेषरूपतया दृष्टान्तत्वेन पर्यवस्यति साप्यपरा निदर्शना ।

यथा मम--

यो वहति मलिनमन्तर्वृद्धौ हानौ च सोऽन्तयति पक्षम् ।
राकायां दर्शे वा क्षपयति पक्षं क्षपानाथ. ॥

अत्र मालिन्यसम्बन्धपक्षनाशयोः कार्यकारणभावे पूर्वार्द्धे प्रतीयमाने उत्तरार्द्धं ग्राहकम् । केचित्तु ललिताख्यमलङ्कारं वदन्ति । प्रस्तुतवाक्यार्थेऽप्रस्तुतवाक्यार्थाभेदो हि निदर्शना । यत्र तु प्रस्तुतवाक्यार्थमनुपन्यस्याप्रस्तुतवाक्यार्थ उच्यते तत्र ललितम् ।

यथा--

अनायि देशः कतमस्त्वयाद्य वसन्तमुक्तस्य दशां वनस्य ।
त्वदाप्तसङ्केततया कृतार्था श्रव्यापि नानेन जनेन संज्ञा ॥

अत्र कुतस्त्वमागत इति प्रस्तुतमनुपन्यस्य तत्सदृशवाक्यार्थान्तरोपन्यास इति।

**अप्रस्तुतप्रशंसा प्रकृतप्रतिपत्तिरेतया यत्र ।**

अप्रकृतार्थोक्त्या प्रकृतार्थप्रत्ययो यत्र इयमप्रस्तुतप्रशंसा। अप्रस्तुतस्य प्रतिपादनमात्र विवक्षितं न स्तुतिरेव । अस्याः पञ्च भेदानाह

**कार्ये हेतौ व्याप्यव्यापकयोरन्यगीः समे तस्य ॥ १८ ॥**

कार्ये प्रकृते अन्यस्य कारणस्य । हेतौ प्रकृतेऽन्यस्य कार्यस्य । व्याप्ये विशेषे प्रकृते तदन्यस्य सामान्यस्य । व्यापके सामान्ये प्रकृते तदन्यस्य विशेषस्य । समे प्रकृते तदन्यस्य समस्याभिधानमिति पञ्चविधेयमित्यर्थः ।

तत्राद्या यथा--

ब्राह्मणातिक्रमत्यागो भवतामेव भूतये ।
जामदग्न्यश्च वो मित्रमन्यथा दुर्मनायते ॥

अत्र रामेण रावणं प्रति स्वोक्त्यतिक्रमेण तदनिष्टविधानरूपे कार्ये वक्तव्ये स्वदौर्मनस्यरूपं कारणमुक्तम् ।

द्वितीया यथा--

पुरं निःशेषघटितकपाटद्वारमावृतम् ।
रक्षा चाप्तैर्भक्तिमद्भिः कौणपैः परितः कृता ॥

अत्र रावणेन भद्र ! सेनापते ! किंहेतुरयं कलकल इति हेतौ पृष्टे प्रहस्तेन नगरावरोधहेतुमनभिधाय तत्कार्यमात्रमुपन्यस्तम् ।

तृतीया यथा--

अज्ञो वा यदि वा विपर्ययगतो ज्ञानेऽथ सन्देहवान्
दृष्टादृष्टविरोधि कर्म कुरुते यस्तस्य गोप्ता गुरुः ॥
निःसन्देहविपर्यये सति पुनर्ज्ञाने विरुद्धक्रियं
राजा चेत्पुरुषं न शास्ति तदयं प्राप्तः प्रजाविप्लवः ॥

अत्र परशुरामस्य शासने वक्तव्ये सामान्यमुक्तम् ।

चतुर्थी यथा—

धियात्मनस्तावदसाधु नाचरं परस्तु तद्वेद स यद्वदिष्यति ।
जनावनायोद्यमिनं जनार्दनं क्षये जगज्जीवपिब शिव वदन् ॥

(नैप०स०९श्लो०।१२४)

विपरीतग्राही लोक इति सामान्ये वक्तव्ये उत्तरार्द्धे विशेष उक्तः। तुल्येन तुल्याभिधाने त्रयः प्रकाराः। श्लेषः समासोक्तिः सादृश्य-मात्रं चेति।

धर्ममात्रश्लेषो यथा मम—

छिद्रेण गुणगणेन व्याप्तं येषां सदा हृदयम् ॥
तेषां मृणालकानां मुखमुद्राजीवनमुचितम् ॥

उद्गतं राजीवनं कर्म (कमलं) यत्र तादृशं मुखम्। अथ च आजीवनं जीवनपर्यन्तं मुखस्य मुद्रा मौनम्। मृणालपदं चैकमात्रार्थकम्।

विशेषणविशेष्योभयश्लेषो यथा मम—

खट्वाङ्गं पाणितले निधाय यो भूतले स्वपिति।
दिग्वासा नेत्रत्रययुतोऽपि किं सर्वविस्तया तस्य ॥

समासोक्तिर्यथा—

एणाद्याः पशवः किरातपरिषन्नैषा गुणग्राहिणी
सञ्चारो नहि नागरस्य विषयोच्छिन्न मुनीनां मनः।
धूमेनापि सुगन्धिना दश दिशः सामोदमामोदय-
न्नामूलं यदि दह्यतेऽगुरुतनुः कस्मै किमाचक्ष्महे ॥

सादृश्यमात्रं यथा मम—

ऐरावतमन्दारौ दुर्वासाश्चेति सहभुवो लक्ष्म्याः।
एतेषां व्यापारात्सा निकृतिं प्राप विधिशक्त्या ॥

केचित्तु प्रस्तुतेन अप्रस्तुतप्रतीतौ समासोक्तिः। अप्रस्तुतेन प्रस्तु-तप्रतीतौ अप्रस्तुतप्रशंसा। प्रस्तुतेन प्रकृतप्रतीतौ तु प्रस्तुताङ्कुरः पृथ गलङ्कारान्तरम्।

यथा—

अन्यासु तावदुपमर्दसहासु भृङ्ग! लोलं विनोदय मनः सुमनोलतासु।
मुग्धामजातरजसं कलिकामकाले व्यर्थं कदर्थयसि किं नवमालिकायाः॥

अत्र वृत्तान्तद्वयं प्रकृतमेवेत्यतिरिक्तत्वमेव युक्तमित्याहुः।

अप्रकृतेन निगीर्णे साध्यवसानाश्रयात्प्रकृते।
प्रकृतस्याप्यधिकत्वे यद्येवं स्यात्तथापत्तौ।
स्याज्जन्यजनकपौर्वापर्यत्यागश्च सा त्वतिशयोक्तिः ॥ १९ ॥

उपमेयवाचकपदमपहाय उपमानवाचकपदेनैव तदुपादानमेकाति-शयोक्तिः।

यथा—

तमस्तोमः पूर्वं तदनु विमलः शीतकिरण-
स्ततः कोकद्वन्द्वं तदनु च न किञ्चित्पुनरभूत् ।
अनङ्गस्यावर्त्तस्तदनु कदलीकाण्डयुगलं
ततोऽब्जाब्जौ पद्मौ शिव ! शिव ! विधेः सृष्टिरपरा ॥

अत्र कचवदनाद्युपमेयानां तमःप्रभृत्युपमानवाचकशब्दैरेवोपादानम् । यत्र प्रकृतस्य सजातीयादत्युज्ज्वलत्वं वर्ण्यते सा द्वितीया ।

यथा मम—

अन्यत्कुतूहलमपाङ्गतरङ्गितानामन्यैव रीतिरपि गीतिभृतः स्मितस्य ॥
एणीदृशः सदभिसन्धिगुणेषु सूक्तिमुक्ताफलग्रथनकौशलमन्यदेव ॥

यद्येवं स्यादिति केनचिदापादकेन कस्यचिदर्थस्यापादानं तृतीया ।

यथा—

निरन्तरत्वेन निधाय तन्वि ! तारासहस्राणि यदि क्रियेत ।
सुधांशुरन्यः स कलङ्कमुक्तस्तदा त्वदास्यश्रियमाश्रयेत ॥

कारणकार्ययोः पौर्वापर्यपरित्यागे चतुर्थी । तत्परित्यागेऽपि द्वैविध्यम् । पूर्वं कारणस्य पश्चात्कार्यस्योत्पत्तेरुक्तौ युगपत्तदुभयोक्तौ च ।

आद्या यथा—

उदेति पूर्वं कुसुमं ततो रजो घनोदयः प्राक्तदनन्तरं पयः ।
निमित्तनैमित्तिकयोरयं क्रमस्तव प्रसादस्य पुरस्तु सम्पदः ॥

अत्र प्रसादात्पूर्वमेव सम्पदभिधानम् ।

द्वितीया यथा मम—

पुरुहूतहरिन्मुखे हिमांशुर्विरहिण्या हृदये च वीतिहोत्रः ।
क्षणमन्यतराश्रयक्षणक्षयहीनं प्रतिपद्य दिद्युताते ॥

अत्र चन्द्रोदयस्य विरहिणीतापाश्रयक्षणध्वंसानधिकरणक्षणवृत्तित्वोक्तेर्विरहिणीतापस्य च चन्द्रोदयक्षणध्वंसानधिकरणक्षणवृत्तित्वोक्तेरर्थात्तयोरेकक्षणोत्पत्तिकत्वं लभ्यते । केचित्तु—"कार्यकारणयोरभेदेन वर्णनं हेतुरलङ्कारः ।

यथा—

लक्ष्मीविलासा विदुषां कटाक्षा वेङ्कटप्रभोः ।

एवं कस्यचिदर्थस्य बाधितत्वबोधनार्थं कस्यचिद्बाधितार्थस्य कल्पनं मिथ्याध्यवसितिः ।

यथा—

अस्य क्षोणिपतेः परार्द्धपरया लक्षीकृताः सङ्ख्यया
प्रज्ञाचक्षुरवेक्ष्यमाणबधिरश्रव्याः किलाकीर्त्तयः ।
गीयन्ते स्वरमष्टमं कलयता जातेन वन्ध्योदरा-
न्मूकानां प्रकरेण कूर्मरमणीदुग्धोदधे रोधसि (नैष०स०१२श्लो०१०६)

तथा —

सम्भावनं यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये ।
यदि शेषो भवेद्वक्ता कथिताः स्युर्गुणास्तव ॥

इति सम्भावनमलङ्कारः ।

तथा —

बहुभिर्बहुधोल्लेखादेकस्योल्लेख इष्यते ॥

यथा—

गजत्रातेति वृद्धाभिः श्रीकान्त इति यौवतैः ।
यथास्थितश्च बालाभिर्दृष्टः शौरिः सकौतुकम् ॥

एवमेकेन बहुधोल्लेखेऽपि—

गुरुर्वचस्यर्जुनोऽयं कीर्त्तौ भीष्मः शरासने ॥

तथा—

प्रौढोक्तिरुत्कर्षाहेतौ तद्धेतुत्वप्रकल्पनम् ॥

तदकारणत्वेऽपि तत्कारणत्वकल्पनं प्रौढोक्तिः ।

यथा—

कल्पतरुकामदोग्ध्रीचिन्तामणिधनदशङ्खानाम् ।
रचितो रजोभरवयस्तेजःश्वासाम्बरैरेषः ॥

अत्र कल्पद्रुमादेराधिकदानं प्रत्यहेतुत्वेऽपि राज्ञः कल्पद्रुमादिसम्बन्धिभूतावयवनिर्मितत्वात् हेतुत्वेन कल्पनमिति प्रौढोक्तिः" इति वदन्ति ।

सादृश्यपर्यवसिते यस्मिन्वाक्यद्वये धर्मः ।
एकोऽपि द्विरुपात्तस्तां प्रतिवस्तूपमामाहुः ॥ २० ॥

सादृश्याभिप्रायके वाक्यद्वये यत्रैक एव धर्मो द्विवारं निर्दिश्यते सा प्रतिवस्तूपमा ।

यथा—

देवीं वाचमुपासते हि बहवः सारं तु सारस्वतं

जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः।
अब्धिर्लङ्घित एव वानरभटैः किन्त्वस्य गम्भीरता-
मापातालनिमग्नपीवरतनुर्जानाति मन्थाचलः॥

अत्र ज्ञानरूप एको धर्म उभयत्र निर्दिष्टः। मुरारिमन्दरयोः साम्यं च पर्यवस्यतीति स्पष्टम्।

यथा वा--

नान्यत्र राघवाद्वंशात्प्रसूतिर्वत्सयोः क्षमा।
दुग्धार्णवादृते जन्म चन्द्रकौस्तुभयोः कुतः॥

पूर्वत्र भावरूपोऽत्र त्वभावरूप इति विशेषः।

वैधर्म्येण यथा मम--

तत्तद्युक्तिविशेषगुम्फितवचःसन्दर्भगर्भीकृता-
नर्थानास्वदितुं कवेरथ धियां धन्याः शतेऽपीशते।
सभ्रूविभ्रमदृक्तरङ्गविहितामास्ये मृगाक्ष्याः क्षमो
विच्छित्तिं न विलक्षणां क्षणमपि क्षीणेक्षणः प्रेक्षितुम्॥

अत्रान्धो यथोक्तशोभां साक्षात्कर्त्तुमक्षम इत्यस्य विपर्ययेण चक्षुष्मानेव तां साक्षात्कर्त्तुमर्हः इत्यनेन प्रकृतसिद्धिः।

साधारणस्य साम्यप्रतियोग्यनुयोगिनोर्यत्र।
निर्देशः स्यात् विम्बप्रतिबिम्बतया स दृष्टान्तः॥ २१॥

यत्रोपमानोपमेयद्विशि बिम्बप्रतिबिम्बभावेन भिन्नधर्मोपादानं स दृष्टान्त इत्यर्थः। प्रतिवस्तूपमायां त्वेकस्यैव धर्मस्याभिधानमिति भेदः।

यथा—

अयमयमीदृशप्रशमविश्वसनीयतनु-
र्भुवनभयङ्करीः कथमधत्त रुषोऽपि मुनिः।
स्थितमिदमेव वा मृदुमनोज्ञतुषारतमा-
स्तमसि सति ज्वलन्ति सहसैव महौषधयः॥

अत्र रोषज्वलनयोर्बिम्बप्रतिबिम्बभावः।

वैधर्म्येण यथा मम—

आपन्नतापविहतिस्पृहयातिसान्द्रं वैजात्यवत्सुकृतशालिन एव चेतः।
केन श्रुतं बहलहालहलावलीढादाशीविषादपि समुन्मिषितं सुधायाः॥

प्रकृताप्रकृतानां यद्येकान्वयितास्ति दीपकं तत्स्यात्।

प्राकरणिकानामप्राकरणिकानां चैकपदोपात्तधर्मेणान्वयो दीपकम्।

यथा—

> सकलकलाः कल्पयितुं प्रभुः प्रबन्धस्य कुमुदबन्धोश्च ।
> सेनकुलतिलकभूपतिरेको राकाप्रदोषश्च ॥

वर्ण्यत्वेन प्रकृतस्य प्रवरसेनस्य अप्रकृतस्य राकाप्रदोषस्य च कलासाकल्यकल्पनसामर्थ्यरूपैकधर्मान्वयः ।

क्रियादीपकं यथा—

> गणयन्ति नापशब्दं न वृत्तभङ्गं क्षयं नचार्थस्य ।
> रसिकत्वेनाकुलिता वेश्यापतयः कुकवयश्च ॥

निन्द्यत्वेन प्रकृतानां कुकवीनाम् अप्राकरणिकानां च वेश्यापतीनामेकक्रियान्वयः ॥

यत्रैकमेव कारकमन्वयमेति क्रियासु बह्वीषु ॥ २२ ॥

एकस्य कारकस्यानेकक्रियान्वयित्वेऽपरं दीपकम् ।

यथा—

> प्रणमति पश्यति चुम्बति संश्लिष्यति पुलकमुकुलितैरङ्गैः ।
> प्रियसङ्गाय स्फुरितां वियोगिनी वामबाहुलताम् ॥

माला तु पूर्वपूर्वं विधान्तरेणोत्तरान्वयिनि ।

तस्यामेव क्रियायां रूपान्तरेणान्वितस्य रूपान्तरेण तत्रैव पुनरन्वये मालादीपकम् ।

यथा मम—

> आत्मा ते मनसात्मनाप्यभिनवा लोकोत्तराः कल्पना
> श्चम्पूनामथ कल्पनाभिरमलं माधुर्यमभ्यर्हितम् ।
> माधुर्येण पदानि कान्यपि पदैरप्यावृदप्यावृता
> श्रोत्रं तेन मनोऽमुनापि च मुदामद्वैतमासाद्यते ॥

आसादनक्रियायां पूर्वं कर्मत्वेनान्वितस्यानन्तरं कर्त्तृत्वेनान्वयः ।

प्रकृतानां तादृक्के भिन्नानां वापि तुल्ययोगित्वम् ॥ २३ ॥

प्रकृतानामेव अप्रकृतानामेव वा एकधर्मान्वये तुल्ययोगिता ।

प्रकृतानां यथा—

> सम्भाव्यमिह भुवनाभयदानपुण्य-
> सम्भारमस्य वपुरत्र हि विस्फुरन्ति ।
> लक्ष्मीश्च सात्त्विकगुणज्वलितं च तेजो
> धर्मश्च मानविजयौ च पराक्रमश्च ॥

अप्रकृतानां यथा—

अवनिरमरसिन्धुः सार्द्धमस्मद्विधाभि-
स्स च कुलगुरुराद्यः छन्दसां यः प्रयोक्ता ।
स च मुनिरनुयातारुन्धतीको वसिष्ठ-
स्त्वयि वितरतु भद्रं भूयसे मङ्गलाय ॥ (उत्तर०अं०३श्लो०४८)

उभयोः साम्यप्रोक्तौ विशेष उपमेयगे व्यतिरेकः ॥

उपमानादुपमेयस्य केनचिद्धर्मेणाधिकवर्णनं व्यतिरेकः ।

हानिप्रकर्षहेत्वोरुक्तौ त्रेधा च तदनुक्तौ ॥
शब्दार्थाक्षेपोत्थे साम्ये श्लेषे च दिग्युगमितः सः ॥ २४ ॥

उत्कर्षापकर्षहेत्वभिधाने एकः । उत्कर्षहेतुमात्रेऽपकर्षहेतुमात्रे तदुभयहेतौ वानुक्ते त्रय इति मिलित्वा चत्वारः । तत्रापि साम्यस्य शाब्दत्वे आर्थत्वे आक्षेपगम्यत्वे वेति चतुर्णां प्रत्येकं त्रैविध्ये द्वादश । द्वादशानामपि शुद्धत्वेन श्लेषेण च द्वैविध्ये चतुर्विंशतिर्भेदा व्यतिरेकस्येत्यर्थः । क्रमेणोदाहरणानि ।

आद्यानां चतुर्णां यथा मम—

वाङ्मयसरसामन्तर्गाहनकुतुकैकरालिकोऽपि ।
अपरश्चपलो बुध इव धीरोऽयं न मदमाधत्ते ॥

चापलधैर्ये अपकर्षोत्कर्षहेतू उक्तौ । मदमाधत्ते न लेशमपीति चतुर्थचरणनिर्माणे उत्कर्षहेतुरनुक्तः । क्वचिदप्यपरो बुध इवेति तृतीयचरणपाठेऽपकर्षहेतुरनुक्तः । एतत्पादद्वयेनैवोत्तरार्द्धपाठ तूभयहेत्वनुक्तिः । सर्वत्र इवपदप्रयोगात् शाब्दं साम्यम् । आर्थे साम्ये यथा तत्रैव 'चपलतरेतरबुधवत्' इति पाठे उक्तरीत्यैव चतुर्थचरणपाठे । क्वचिदपि चेतरबुधवदिति तृतीयचरणपाठे पादद्वयेनैवोत्तरार्द्धपाठे च तुल्यार्थकवतिप्रयोगादार्थं साम्यम् ।

आक्षेपात्साम्ये यथा तत्रैव 'चपलान्बुधानभिभवन्' इति पाठे चपलपदस्थाने सकलपदप्रक्षेपे । अन्यत्र पूर्वरीत्या पठिते अभिभवस्य सादृश्ये शक्तिलक्षणयोरभावात्साम्याक्षेप इति द्वादश भेदाः ।

श्लिष्टभेदा यथा मम—

अभ्यासप्रतिभादिप्रतिभागुणसम्पदनपेताः ।
अविकलकलस्य विधुवत्कादाचित्की न काचन कलास्य ॥

अवैकल्यं कादाचित्कत्वं चोत्कर्षापकर्षहेतू । 'बहुतरकलस्य' इति पाठे

उत्कर्षहेत्वनुक्तिः।'बुधमौलिमणेर्न काचन' इत्यादिचतुर्थचरणपाठेऽपकर्ष-हेत्वनुक्तिः। उक्तद्वयेनैवोत्तरार्द्धपाठे उभयहेत्वनुक्तिः। षष्ठीसमर्थादिवार्थे वतिरिति शाब्दं साम्यम्। तत्रैव—

अविकलकलो न विधुवत्कादाचित्कीं कलामयं धत्ते

इति पाठे प्रथमः, अविकलपदस्थाने बहुतरपदपाठे द्वितीयः। कादाचित्कीमित्यत्र बुधमौलिमणिरिति पाठे तृतीयः। उक्तद्वयेनोत्तरार्द्धे चतुर्थः। तुल्यार्थे वतिरित्यार्थे साम्ये।

अविकलकलो विधुजयी कादाचित्कीं कलां न धत्तेऽयम्-

इतिपाठे प्रथमः। भेदत्रयं पूर्ववत्। जयमात्रोक्त्या साम्यमाक्षेप्यम्। द्वादशस्वपि कलाशब्दः श्लिष्टः।

इष्टस्याप्यभिधातुं योऽर्थस्य विशेषबोधाय।
स्वयमेव प्रतिषेधः स वक्ष्यमाणोक्तविषय आक्षेपः ॥ २८ ॥

विवक्षितस्यार्थस्य वचनप्रतिषेध आक्षेपः। स च द्विविधः। वक्ष्यमाणविषय उक्तविषयश्च। यत्र वक्तुमारब्धस्यैव निषेधः स आद्यः। उक्तस्यैव वचनवैयर्थ्योक्तिर्द्वितीयः।

आद्यो यथा—

प्रीते विधातरि पुरा परिभूय मर्त्या-
न्वव्रेऽन्यतो यदभयं स भवानहंयुः।
तन्मर्मणि स्पृशति मामतिमात्रमद्य
हा वत्स! शान्तमथवा दशकन्धरोऽसि ॥

अत्र बुद्धिस्थं रावणं प्रति रामादभिभवे विवक्षिते शान्तमिति तन्निषेधः।

द्वितीयो यथा—

यदि ते सन्ति सन्त्येव केयमल्पा विभीषिका।
किमुक्तैः सन्निपत्यैव पताकां तां हरामि वः ॥

अत्र महाराजं प्रति कुतः क्षत्रिया इत्यश्वरक्षकैरुक्ते पूर्वार्द्धेनान्यबलवत्सत्तामुक्त्वापि तादृशकर्माननुष्ठाने वचनमात्रं व्यर्थमित्यभिप्रायेण तन्निषेधः। केचित्तु—"यो निषेधो बाधितः सन्नर्थान्तरे पर्यवस्यति स आक्षेपः।

यथा—

पुरोजन्मा नाद्यप्रभृति मम रामः स्वयमहं
न पुत्रः पौत्रो वा रघुकुलभुवां च क्षितिभृताम्।

अधीरं धीरं वा कलयतु जनो मामयमयं
मया बद्धो दुष्टद्विजदमनदीक्षापरिकरः॥

अत्र पूर्वोक्तनिषेधो बाधितत्वात् ब्राह्मणभङ्गनिषेधातिक्रमं सूचयति।

हेतुं विनापि कार्यं यत्रोक्तं स्याद्विभावना सा तु।

प्रसिद्धकारणव्यतिरेकेऽपि कार्योत्पत्तिवर्णनं विभावना।

यथा—

अरालरुचिरे भ्रुवौ न न मरालमन्दा गति-
र्दृगञ्चलमचञ्चलं हृदयभूरभूतोदयः।
सुधा न खलु वाक्पथातिथिरथापि यूनां मनो
मनोजशरजर्जरं नयति मोहमस्यास्तनुः॥

इयं चानुक्तनिमित्ता। सौन्दर्यविशेषस्य हेतोरनभिहितत्वात्।

उक्तनिमित्ता यथा—

प्रत्युप्तस्येव दयिते तृष्णादीर्घस्य चक्षुषः।
मर्मच्छेदपर्यन्तैराकर्षो न समाप्यते॥

अत्र सीतायाश्चक्षुषो रामसंयोगप्रतिबन्धकयत्नसत्त्वेऽपि प्रतिबन्धाभावः। तृष्णायाश्च तद्धेतोरुपादानम्।

हेतौ सत्यपि कार्यानुत्पत्तिः स्याद्विशेषोक्तिः॥ २६॥

सा च त्रिधा-उक्तनिमित्ताऽनुक्तनिमित्ता चेति।

आद्या यथा—

स्वेषूत्कृत्य हुतेषु मूर्द्धसु जवादग्नेः स्फुटित्वा बहि-
र्व्याकीर्णेषु लवेषु दैवलिपिभिर्दृष्ट्वापि रामायणम्।
चित्तेनास्खलितेन यस्तदधिकं ब्रह्माणमप्रीणय-
त्कस्तस्मै प्रथमाय मानिषु महावीराय वैरायते॥

अत्र भयहेतौ भाविरामायणदर्शनेऽपि रावणस्य भयाभावः। महावीरत्वं च तद्धेतुरुपात्तः।

द्वितीया यथा मम—

पण्डितता तव खण्डितनयचित्रशिखण्डितनयेयम्।
अनुपहते तनुजनुषी तनुनैव मदस्य वार्त्तापि॥

मदहेतुविद्यादिसत्त्वेऽपि मदानुत्पत्तिः। धीरत्वरूपं च तन्निमित्तमनुक्तम्।

तृतीया यथा—

यद्विद्वानपि तादृशोऽप्यभिजने धर्म्यात्पथो विच्युतः
किं ब्रूमोऽत्र तदन्यदेव न वसन्त्येकत्र सर्वे गुणाः ।
लीलानिर्जितषण्मुखाद्भगवतः श्रीजामदग्न्यादृते
निर्विघ्नप्रतिपन्नविश्वविजयो वीरस्तु कस्तादृशः ॥

अन्यदेवेत्यस्यान्यहेतुकमेवेत्यर्थः। हेतुश्च विशिष्य न निर्वक्तुं शक्यः।

निर्देशक्रमतो यदि समन्वयस्तद्यथासङ्ख्यम् ॥ २७ ॥

यथा ममाभिरामराघवे—

दुर्वादानिलवृद्धरोषदहनाद्भार्गवीरणप्रेरण-
प्रायन्यायविपाटनप्रकटितत्रोटिद्विकोटित्रुटिम् ।
कृत्वा त्वामथ कर्णिकारमरुणं सम्पातिमप्यञ्जसा
लङ्केन्द्रः स्वयमातनोति रहितांस्तातात्मजभ्रातृभिः ॥

यदि सामान्यविशेषौ समर्थयेते विशेषसामान्ये ।
साधर्म्याद्वैधर्म्यादपि वा सोऽर्थान्तरन्यासः ॥ २८ ॥

सामान्येन विशेषस्य विशेषेण सामान्यस्य वा समर्थनमर्थान्तर-
न्यासः। प्रत्येकं साधर्म्येण वैधर्म्येण चेति चतुर्विधः।

आद्यं साधर्म्येण यथा--

संवृत्तोऽयं यदि तव भुजच्छायया सम्प्रतीन्द्रोऽ-
निर्विघ्नश्रीरियमभिनवा कीदृशी ते प्रशस्तिः ।
इक्ष्वाकूणां लिखितपठिता स्ववधूगण्डपीठ-
क्रीडापत्रप्रकरमकरी पाशुपाल्यं हि वृत्तिः ॥

वैधर्म्येण यथा—

बाले ! तवेह विरहानलकर्षिताया हस्तच्युतं वलयमेति तलप्रदेशम् ।
दूरे पुनः स्थितिमगादिदमङ्गुलीयं स्थानच्युतिर्महत एव भवत्यनार्या ॥

द्वितीयं साधर्म्येण यथा--

न तेजस्तेजस्वी प्रसृतमपरेषां प्रसहते
स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः ।
मयूखैरश्रान्तस्तपति यदि देवो दिनकरः
किमाग्नेयो ग्रावा निकृत इव तेजांसि वमति ॥

( उ० अं० ६ श्लो० १६ )

वैधर्म्येण यथा मम—

भावविरोधी स्फुटतां विरुद्धमेवाश्रयन्वहति।
नाध्यक्षं यदभावः प्रतियोगिनमन्तरा लभते॥

अत्रोत्तरार्द्धस्य वाच्यार्थविपर्ययभूतेन प्रतियोगिविषयत्वनियमेन पूर्वोक्तसामान्यसमर्थनम्। केचित्तु—

यस्मिन्विशेषसामान्यविशेषाः स विकस्वरः।

एकविशेषसमर्थनार्थमुपात्तस्य सामान्यस्य समर्थनार्थं विशेषान्तरस्याप्युपादानं विकस्वरालङ्कारः।

यथा—

अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम्।
एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः॥
(कुमार० स० १ श्लो० ३)

अविरोधेऽपि विरोधो यत्रोक्तः स्याद्विरोधः सः॥ २९॥

आपाततो विरोधप्रत्ययाद्विरोधः। अयमेव विरोधाभासः।

स्याज्जातेर्गुणकर्मद्रव्याणां स्वस्वपरयोगात्॥

जातेर्जातिगुणक्रियाद्रव्यैः, गुणस्य गुणक्रियाद्रव्यैः, क्रियायाः क्रियाद्रव्याभ्यां द्रव्यस्य द्रव्येण सह विरोध इति दश भेदाः।

क्रमेणोदाहरणानि।

अद्भुतमिदं यदिन्दुस्तपनः पवनश्च पावको जातः।
तव विरहे किं चित्रं शरत् समा यदभवत्तस्याः॥

अत्र वायुत्ववह्नित्वजात्योः सामानाधिकरण्यम्।

शस्त्रीकृतस्तरुवरो हरिपुङ्गवेन लङ्केन्द्रवक्षसि मृणालमृदुः पपात।
तत्र स्थितैस्तु कुसुमैः कुसमेषुरेनं सीतावियोगविधुरं दृढमाजघान॥

वृक्षत्वजातिमृदुत्वगुणयोः।

अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना
तथा वृत्तं पापैर्व्यथयति यथा क्षालितमपि।
जनस्थाने शून्ये करुणकरुणैरार्यचरितै-
रपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्॥
(उत्तर० अं० १ श्लो० २८)

ग्रावत्वजातिरोदनक्रिययोः। प्रथमश्लोके सूर्यत्वजातिचन्द्रद्रव्ययोः।

वज्रादपि कठोराणि मृदूनि कुसुमादपि।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति॥
(उत्तर० अं० २ श्लो० ७)

काठिन्यमृदुत्वगुणयोः ।

स्त्रीणां हि साहचर्याद्भवन्ति चेतांसि भर्तृसदृशानि ।
मधुरापि मूर्छयति यत् विषविटपिसमाश्रिता वल्ली ॥

माधुर्यगुणमूर्छनक्रिययोः ।

मुनेः कलशजन्मनो जयति कापि गम्भीरता
यया चुलुकमम्भसामपि निधिः समापद्यत ।
अमुष्य पुनरीश्महे न विवरीतुमुत्तुङ्गतां
यया भवति नोच्चकैरहह सोऽपि विन्ध्याचलः ॥

नीचत्वगुणविन्ध्याचलद्रव्ययोः

(१)यं चेष्टन्तमनीकसीमनि परित्रस्तः पराञ्चन्नपि
प्रत्यक्षीकुरुते सहस्रनयनः पृष्ठोद्भवैरक्षिभिः ।
चक्रे वर्त्म च नागलोकजयिनीं यात्रामिव प्रस्तुव-
न्यः कैलासमुदस्य कीदृशमुपादानं तु तस्यापदाम् ॥

पलायनपृष्ठस्थप्रत्यक्षीकरणक्रिययोः ।

त्रैविक्रमः सकलदानवजीवितव्यविद्यासमाप्तिलिपिरेव सुदर्शनो मे ।
यस्मिन्निपत्य हृदये दलितारजालज्योतिस्तुषारमयमाभरणं बभूव ॥

दलनक्रियासुदर्शनद्रव्ययोः ।

अवदायति दिक्कदम्बके कुमुदानामुदिते मुदां मदे ।
कुतुकं विरहस्पृशामपि क्षणदेशो वडवाशुशुक्षणिः ॥

चन्द्रवडवानलयोः ।

**यो वस्तुनः स्वभावस्तस्य निरुक्तिः स्वभावोक्तिः ॥ ३० ॥**

यथा—

अयमेकतमेन पक्षतेरधिमध्योर्ध्वगजङ्गमाङ्घ्रिणा ।
स्खलनक्षण एव शिश्रिये द्रुतकण्डूयितमौलिरालयम् ॥
(नैष० स० २ श्लो० ३)

**व्याजस्तुतिर्विपर्ययपर्यवमानेऽस्तुतिस्तुत्योः ।**

निन्दायाः स्तुतौ स्तुतेर्वा निन्दायां तात्पर्ये व्याजस्तुतिः ।

आद्या यथा मम रुक्मिणीपरिणये—

आसंसृतिप्रवहणाद्यदुनान्वयेन
नित्यं सदव्यवहरन्नपि मायया त्वम् ।

---

(१) चेष्टन्तमित्यनुदात्तेत्त्वप्रयुक्तात्मनेपदस्यानित्यत्वेन समाधेयम् ।

विभ्रज्जवाकुसुमसन्निहितत्वमर्क-
ग्रावेव गच्छसि न तद्गुणसम्प्रयोगम् ॥

अत्र कृष्णं प्रति सुप्रसिद्धमेव तवेदृशे कर्मणि नैपुण्यमिति रुक्मिण्या वञ्चनकर्मज्ञत्वरूपनिन्दायामीश्वररूपत्वप्रतिपत्त्या स्तुतौ पर्यवसानम्।

द्वितीया यथा—

कोऽप्येष सम्प्रति नवः पुरुषावतारो वीरो न यस्य भगवान्भृगुनन्दनोऽपि।
पर्याप्तसप्तभुवनाभयदक्षिणानि पुण्यानि तातचरितानि च यो न वेद ॥

( उत्त० अं० ५ श्लो० ३४ )

चन्द्रकेतोरत्र लवस्य स्तुतिमुखनिन्दायां तात्पर्यम्। उभयत्रापि स्तुतिनिन्दयोरेकविषयत्वम्। क्वचित्तु अन्यनिन्दास्तुतिभ्यामन्यस्तुतिनिन्दावगमः।

यथा—

क्षोणी पर्यटिता श्रमाय विदुषां वादाय विद्यार्जिता
मानध्वंसनहेतवे परिचितास्ते ते धराधीश्वराः।
विश्लेषाय सरोजसुन्दरदृशामास्ये कृता दृष्टयः
कुज्ञानेन मया प्रयागनगरे नाराधि नारायणः ॥

अत्र स्वनिन्दया तदाराधकस्तुतिः।

एकः स एव जीवति हृदयविहीनोऽपि सहृदयो राहुः।
यः सकललघिमकारणमुदरं न बिभर्त्ति दुष्पूरम् ॥

अत्र राहुस्तुत्यान्यनिन्दा। अयमपि व्याजस्तुतिभेद इति दीक्षिताः। अप्रस्तुतप्रशंसेयमिति प्राञ्चः। केचित्तु—

निन्दाया निन्दया व्यक्तिर्व्याजनिन्देति गीयते ॥

यथा—

विधिरेव विशेषगर्हणीयः करट! त्वं रट कस्तवापराधः।
सहकारतरौ चकार योऽसौ सहवासं सरलेन कोकिलेन ॥

इह विधिनिन्दया विवेकहीनस्य प्रभोर्निन्दा गम्यते इत्याहुः।

सहसमभिव्याहारात्सहोक्तिरुभयान्विते धर्मे ॥ ३१ ॥

सहशब्दसमानार्थकशब्दबलादेकधर्मस्य धर्मिद्वयसम्बन्धे सहोक्तिः।

यथा—

अनेन सार्धं तव यौवनेन कोटिं परामाच्छिदुरोऽध्यरोहत् ।
प्रेमापि तन्वि ! त्वयि वासवस्य गुणोऽपि चापे सुमनःशरस्य ॥
(नै० स० ८ श्लो० ६१)

यत्रान्येन विनान्योऽसाधुः साधुर्विनोक्तिः सा ॥

केनचिदर्थेन विना कस्यचिदप्राशस्त्यं प्राशस्त्यं वा यत्रोच्यते सा विनोक्तिः ।

आद्या यथा—

विना सीतादेव्या किमिव नहि दुःखं रघुपतेः
प्रियानाशे सर्वं किल जगदरण्यं हि भवति ।
स च स्नेहस्तावानयमपि वियोगो निरवधिः
किमित्येवं पृच्छस्यनधिगतरामायण इव ॥
(उत्तर० अं० ६ श्लो० ३०)

दुःखपदं तत्कारणपरम् । अत्र सीताव्यतिरेकेण साम्राज्यादेर्दुःखहेतुत्वरूपमप्राशस्त्यम् ।

द्वितीया यथा मम—

कैरवाकरनिबद्धसौहृदे तेजसि स्फुरति पूर्वदिङ्मुखे ।
कामनीयकमलं तदानशे हन्त सन्तमसमन्तरा निशा(१) ॥
अत्र तमोविरहेण राज्ञ्याः प्राशस्त्यम् । केचित्तु—
नित्यसम्बन्धानामसम्बन्धवचनं विनोक्तिः ।
मृणालमन्दानिलचन्दनानां शिरीषशैवालकुशेशयानाम् ।
वियोगदूरीकृतचेतनाया विनैव शैत्यं भवति प्रतीतिः ॥
इह शैत्याविनाभावेऽपि मृणालादीनां तद्विनाभावोक्तिरित्याहुः ।

सदृशासदृशैरर्थैरर्थानां विनिमयस्तु परिवृत्तिः ॥ ३२ ॥

इयं त्रिधा-समेन समस्य न्यूनेनोत्तमस्य उत्तमेन न्यूनस्य विनिमयात् । आद्या द्विधा । द्वयोरुत्तमत्वे न्यूनत्वे च ।

यां चन्द्रकैर्मदजलस्य महानदीनां
नेत्रश्रियं विकसितां विदधुर्गजेन्द्राः ।
तां प्रत्यवापुरविलम्बितमुत्तरन्तो
धौताङ्गलग्ननवनीलपयोजपत्रैः ॥

---

(१) सन्तमसम् = अन्धकारम्, अन्तरा = विना,कामनीयक = रामणीयकम्,निशा,आनशे = प्राप ।

अत्र चन्द्रकप्रयुक्तनेत्रशोभया नीलनलिनदलप्रयुक्तनेत्रशोभया ।

न्यूनेन न्यूनस्य

यथा मम—

स्वयमादाय कलङ्कं विरहिभ्यो वेदनां दत्से ।
रजनीजीवितवल्लभ ! कोऽस्मिन्विषये तवोत्साहः ॥

द्वितीया यथा—

यत्पीयूषमयूखमालिनि तमःस्तोमावलीढायुषां
नेत्राणामपमृत्युहारिणि पुरः सूर्योढ एवातिथौ ।
अम्भोजानि पराञ्चि तन्निजमघं दत्त्वेव तेभ्यस्ततो
गौराङ्गीवदनोपमासुकृतमादत्ते पतिर्यज्वनाम् ॥

तृतीया यथा—

अस्ताचलेऽस्मिन्निकषोपलाभे सन्ध्याकषोल्लेखपरीक्षितो यः ।
विक्रीय त हेलिहिरण्यपिण्ड तारावराटानियमादित द्यौः ॥

( नैष० स० २२ श्लो० १३ )

भाविकमध्यक्षं स्यात्सध्वंसप्रागभावानाम् ॥ ३२ ॥

सध्वसाः अतीता सप्रागभावा भाविनः तेषां विद्यमानवत् लौकिकविषयत्वकथनं भाविकम् ।

आद्यं यथा—

पश्यामि वञ्जुलस्थानं भूतपूर्वखरालयम् ।
प्रत्यक्षानिव वृत्तान्तान् पूर्वाननुभवामि च ॥

( उत्त० अं० २ श्लो० १६ )

द्वितीयो यथा मम—

जीवितेशितरि दूरयियासौ कामिनीमनुनिनीषति साम्ना ।
पाण्डिमप्रभृतयोऽनुबभूवुर्भाविनोऽपि नयनाध्वगभावम् ॥

इह भाविनामपि विरहचिह्नानां चाक्षुषं वर्णितम् ।

वाक्यपदार्थत्वाभ्यां हेतूक्तिः काव्यलिङ्गं स्यात् ।

हेतुवचनं काव्यलिङ्गम् । तत् द्विविधम् । हेतोर्वाक्यार्थत्वे पदार्थत्वे च ।

आद्यं यथा—

दत्तेन्द्राभयदक्षिणैर्भगवतो वैवस्वतादामनो-
र्दृप्तानां दहनाय दीपितनिजक्षत्रप्रतापोष्मभिः

आदित्यैर्यदि विग्रहो नृपतिभिर्धन्यं ममैतद्भवे-
द्दीप्तास्त्रस्फुरदुग्रदीधितिशिखानीराजितज्यं धनुः ॥
( उत्त० अं० ६ श्लो० १८ )

अत्र रामादिभिः सह युद्धप्रसङ्गो धनुषः श्लाघ्यत्वे हेतुः ।

द्वितीयं यथा––

सिद्धश्रोत्रपरम्परापरिगतैरेभिः प्रपौत्रस्य ते
वृत्तैरद्य पुलस्त्यवर्जमभितः स्मेरेषु देवर्षिषु ।
विष्वग्वृत्तिरसङ्गता नमयितुं दुर्वारलज्जाभर-
म्लानश्रीस्तु चतुर्मुखी भगवतो धातुः कथं वर्त्तते ॥

अत्र ब्रह्ममुखचतुष्टयस्य नमयितुमशक्यत्वे विष्वग्वृत्तित्वं हेतुः ।

पर्यायोक्तं कथितं वाच्यस्यैवान्यभङ्ग्योक्तिः ॥ ३३ ॥

वाच्य एवार्थो यत्र व्यञ्जनयोच्यते तत्पर्यायोक्तम् । नचैकस्यैव वृ-त्तिद्वयेन प्रत्यायनेऽव्ययमिति वाच्यम् । प्रकारभेदेन तदभावात् ।

यथा मम––

मिथ्याभूतं जगतो यस्य पदं यत्पदस्य जगदेव ।
तावपि पुरतो भवतो भवतो वत नोदयत्प्रतिभौ ॥

अत्र लौकिकप्रत्यक्षाविषयचरणतया शेषः जगदनिर्वचनीयत्वता त्पर्यवत्तया च व्यासो रूपान्तरेण प्रतिपादितौ ।

वस्तुप्रचय उदात्तं महतामङ्गत्ववचनं च ।

वस्तुसम्पत्तिवर्णनमुदात्तम् ।

यथा मम––

गारुत्मतस्रावविहारवापीसहोदरे वारिमुचां समूहे ।
यस्यां प्रयस्यत्यपि हंससंसत् विद्युत्सु हेमाब्जमृणालमोहात् ॥

वर्ण्यवस्तुनि महतामर्थानामङ्गत्वकथनमप्युदात्तम् ।

यथा ममाभिरामराघवे––

श्रौतीभिः प्रतिपत्तिभिस्तिसृभिरप्यप्रस्खलद्वृत्तिभि-
मैंत्रेयीरमणोपदेशविशदः सीरध्वजस्ते गुरुः ।
यं चैतन्यमयानुपाधिकसुखं साक्षात्करोत्यादरा-
दात्मा कोऽपि स नीललोहितमयो जागर्त्यमुष्मिन्गिरौ ॥

अत्र शिवः कैलासस्याङ्गत्वमापादितः । शौर्यादीनामुत्कर्षकथनेऽप्युदात्तमेव ।

यथा मम—

ब्रह्माण्डान्तररूपवेश्मसु निजोत्तापोत्थरन्ध्राध्वना
जालौघेन भवत्प्रतापतरणेरन्तर्विशन्ति त्विषः ।
भासन्ते किल तत्र तत्र तदवच्छेदेन तेजोमया
भूयांसस्त्रसरेणवस्तदितरादित्यापदेशस्पृशः ॥

शौर्योत्कर्षवर्णनमत्युक्तिरिति केचित् ।

एकस्मिन् सति हेतौ हेत्वन्तरगीः समुच्चयः प्रोक्तः ।

प्रकृतकार्यसाधनपर्याप्ते एकस्मिन् सत्यपि यत्र कारणान्तरमभ्युपात्तं स समुच्चयः । स त्रिविधः ।

सदसत्सदसद्योगे

सद्योगे असद्योगे सदसद्योगे च ।

आद्यो यथा—

आदेष्टा भगवान्भृगुर्जननयोरौत्पत्तिकब्राह्मयो-
र्देवो धूर्जटिरस्त्रकर्मणि गुरुर्वीर्ये तु दूरे गिराम् ॥
सप्तद्वीपवतीं ददद्भुवमभिप्रेप्सि द्विजान् कश्यप
प्रायानप्रतिमानुभाव ! भवते कस्मैचिदस्मै नमः ॥

नमस्यता प्रयोजकानामनेकेषां संयोगः ।

द्वितीया यथा—

न्यक्कारो हृदि वज्रकील इव मे तीव्रः परिस्पन्दते
घोरेऽन्धे तमसीव मज्जति मनः संमीलितं लज्जया ॥
शोकस्तातविपत्तिजो दहति मां नास्त्येव यस्मिन् क्रिया
मर्माणीव पुनर्भिनत्ति करुणा सीतां वराकीं प्रति ॥

अत्र वैमनस्यहेतूनां भूयसामसतामुपादानम् ।

तृतीयो यथा—

न्यक्कारेण पुरापि कौशिकमखादारभ्य लङ्केश्वरो
धत्ते शाश्वतिकं विरोधमधुना त्वेते हता बान्धवाः ।
उत्साहप्रभुमन्त्रशक्तिभिरलंभूष्णुश्छलज्ञो बली
हंसः शूर्पणखानिकारमपरं दृष्ट्वा कथं मृष्यते ॥

छलबान्धवसम्बन्धयोरसतोरन्येषां च सतां योगः ।

गुणक्रियायौगपद्येऽन्यः ॥ ३४ ॥

गुणयोः क्रिययोर्गुणक्रिययोश्च यौगपद्यादन्यः समुच्चयः ।

आद्यो यथा—

तच्छ्रुत्वा मम राज्ञश्च विषादप्रमदौ द्वयोः।
अभूतां मेघमालोक्य हंसचातकयोरिव ॥

अत्र शर्ववर्मणो वरप्राप्तिश्रवणेन वररुचिसातवाहनयोर्दुःखसुखयोर्यौगपद्यम्।

द्वितीयो यथा—

आपूर्णश्च कलाभिरिन्दुरमलो यातश्च राहोर्मुखं
सञ्जातश्च घनाघनो जलधरः शीर्णश्च वायोर्जवात्।
निर्वृत्तश्च फलैर्महीरुहवरो दग्धश्च दावाग्निना
त्वं चूडामणितां गतश्च जगतः प्राप्तश्च मृत्योर्वशम् ॥

तृतीयो यथा—

काश्मीरजैरिव तवारुणरश्मिजालैरालोहिनी हरिहयोपहिता हरिच्च।
प्रह्लादयानुभवकालिकसंमदानां धारा रथाङ्गमिथुनेषु विजृम्भिता च ॥

अत्र लोहितत्वगुणविजृम्भितक्रिययोः।

एकमनेकमनेकैकस्मिन् क्रमशोऽस्ति चेत्स पर्यायः ॥

एकं वस्त्वनेकस्मिन्ननेकं वा वस्त्वेकस्मिन् क्रमेण यद्वर्ण्यते स पर्यायः। स प्रत्येकं द्विविधः। प्रयोजकनिर्देशानिर्देशभेदात्।

आद्यपर्यायस्याद्यभेदो यथा—

गतया निरन्तरनिवासमधुरः परिनाभि नूनमवमुच्य वारिजम्।
कुरुराजनिर्दयनिपीडनाभयान्मुखमध्यरोहि मुरविद्विषः श्रिया ॥

( माघ० स० १३ श्लो० ११ )

इह नाभिश्रितायाः श्रियो भगवन्मुखवृत्तित्वं कथितमित्येकस्य क्रमेणानेकवृत्तित्वं युधिष्ठिरकृतगाढपरिरम्भमयपीडनभयं च मुखाश्रये प्रयोजकमुक्तम्।

तस्यैव द्वितीयो यथा—

चूडारत्नैर्ज्वलद्भिर्विषधरविवराण्युज्ज्वलान्युज्ज्वलानि
प्रेक्ष्यन्ते, चक्रवाकीमनसि निविशते सूर्यकान्तात्कृशानुः।
किं चामी शल्ययन्तास्तिमिरमुभयतो निर्भरोद्यत्तमिस्रा-
सङ्कृष्टाकृष्टसन्ध्याकणनिकरपरिस्पर्द्धिनो भान्ति दीपाः ॥

अत्र वह्नेः क्रमेण सूर्यकान्तचक्रवाकीहृदयवर्त्तित्वं विरहरूपप्रयोजकस्य चानभिधानम्।

द्वितीयपर्यायस्याद्यभेदो यथा—

यद्विस्मयस्तिमितमस्तमितान्यभावमानन्दमन्दममृतप्लवनादिवाभूत्।
तत्सन्निधौ तदधुना हृदयं मदीयमङ्गारचुम्बितमिव व्यथमानमास्ते॥

इहैकस्मिन् हृदये क्रमेणानन्दतापयोर्वृत्तिः। तापवृत्तौ विरहरूपप्रयोजकस्य च अधुनेत्यनेनोपादानम्। अस्य एतत्कालार्थकतया एतत्पदेन तत्सान्निधिव्यतिरेकाभिधानाद्विरहाधिकरणकालस्यैव प्रतीतेः।

तस्यैव द्वितीयो यथा—

य एव मे जनः पूर्वमासीन्मूर्त्तो महोत्सवः।
क्षते क्षारमिवासह्यं जातं तस्यैव दर्शनम्॥

एकस्मिन्कौशल्यादर्शने क्रमेण सुखदुःखहेतुत्वयोर्वृत्तिः।

अनुमानं व्याप्यबलाद्व्यापकधीर्धर्मिनिष्ठा या॥ ३५॥

हेतुना पक्षे साध्यज्ञानमनुमितिः।

यथा—

यत्पाथोजविनिद्रणप्रकरणे निर्निद्रयत्यंशुमान्
द्राष्टिं पूर्णयतिस्म यज्जलरुहामक्ष्णां सहस्रं हरिः।
साजात्यं सरसीरुहामपि दृशामप्यस्ति तद्वास्तवं
यन्मूलाद्रियतेतमां कवितृभिः पद्मोपमा चक्षुषः॥

अत्र नेत्रं पद्मत्वजातिमत् पद्मासाधारणकार्यवत्त्वादिति कल्पितव्याप्तिमूलकमनुमानम्।

साभिप्रायविशेषणविन्यासे परिकरः प्रोक्तः॥

स्पष्टार्थः।

यथा—

हेरम्बदन्तमुशलोल्लिखितैकभित्ति
वक्षो विशाखविशिखव्रणलाञ्छितं मे।
रोमाञ्चकञ्चुकितमद्भुतवीरलाभा-
त्सत्यं ब्रवीमि परिरब्धुमिवेच्छति त्वाम्॥

अत्र विशेषणद्वयगम्यवक्षःप्रकर्षेण परशुरामोत्कर्षाभिप्रायः।

साक्षाद्यथा—

अम्भोधेर्नारिकेलीरसमिव चुलुकैरुच्चुलुम्पन्त्यपो ये
येषामुत्क्षेपहेतुः शिखरिषु लकुचोदुम्बरप्राय एषः।
ब्रह्मस्तम्भं निवासद्रुममिव रभसाद्विप्रकर्त्तुं क्षमा ये
तेषां कोऽस्त्योऽप्यसह्यधाः सुतममरपतेर्वानराणां नमन्ति॥

केचित्तु विशेष्यार्थकपदस्य साभिप्रायत्वं परिकराङ्कुरः।

यथा—

फणीन्द्रस्ते गुणान्वक्तुं लिखितुं हैहयाधिपः।
द्रष्टुमाखण्डलः साक्षात्काहमेष क्व ते गुणाः॥

अत्र फणीन्द्रादिपदानि मुखादिबाहुल्याभिप्रायाणीति वदन्ति।

व्याजोक्तिर्विशदीभवदर्थस्यापह्नुतिर्मिषतः॥ ३६॥

प्रकाशमानस्य रहस्यवस्तुनः कथञ्चिदावरणं यत्रोच्यते सा व्याजोक्तिः।

यथा—

त्वय्यर्द्धासनभाजि किन्नरगणोद्गीतैर्भवद्विक्रमै-
रन्तःसम्भृतमत्सरोऽपि भगवानाकारगुप्तौ कृती।
उन्मीलद्भवदीयदक्षिणभुजारोमाञ्चबन्धोल्लस-
द्बाष्पैरेव विलोचनैरभिनयत्यानन्दमाखण्डलः॥

इह दशरथविक्रमश्रवणजन्यानन्दाभिनयप्रसक्तप्रकाशस्य तद्विषयमत्सरस्य प्रकारान्तरस्रवदश्रुभिरेव गूहनं कृतम्।

केचित्तु—

युक्तिः परातिसन्धानं क्रियया मर्मगुप्तये॥

क्रियया रहस्यसंवरणं युक्तिरलङ्कारः।

यथा—

दम्पत्योर्निशि जल्पतोर्गृहशुकेनाकर्णितं यद्वच-
स्तत्प्रातर्गुरुसन्निधौ निगदतस्तस्योपचारं वधूः।
कर्णालम्बितपद्मरागशकलं विन्यस्य चञ्चूपुटे
व्रीडार्त्ता विदधाति दाडिमफलव्याजेन वाग्बन्धनम्॥

व्याजोक्तौ वचसैव गोपनमिह तु क्रिययैवेति भेद इत्याहुः।

पृष्टमपृष्टं प्रोक्तं यद्व्यङ्ग्यं वापि वाच्यं वा॥
फलतीतरव्यपोहं परिसङ्ख्यया सा तु सङ्ख्याता॥३७॥

इतरव्यावृत्तितात्पर्यकवचनं परिसङ्ख्या। वचनं च प्रश्नपूर्वकं तदपूर्वकं च। व्यवच्छेदमपि व्यङ्ग्यं वाच्यं चेति चत्वारो भेदाः। प्रश्नपूर्वककथने व्यङ्ग्यव्यवच्छेदे यथा—

महाभारते,

शिलावृत्तिरुवाच।

के देशाः के जनपदाः के श्रमाः के च पर्वताः।
प्रकृष्टाः पुण्यवः काश्च ज्ञायते चेत्तदुच्यताम्॥
देशा इत्यादिप्रश्नः।

सिद्ध उवाच—
ते देशास्ते जनपदास्ते श्रमास्ते च पर्वताः।
येषां भागीरथी गङ्गा मध्ये याति सरिद्वरा॥ इति।

इह तीर्थोत्तराणां हेतुत्वम्। व्यवच्छेद्यं शब्दानुपात्तम्। तत्रैव वाच्ये व्यवच्छेदे यथा मम—
निर्बन्धः क विधेयः सुकृतस्यैवार्जने न वित्तस्य।
किं नाम रक्षणीयं यत्नेन यशो न तु शरीरम्॥
इह व्यवच्छेद्यानामपि शब्द उपात्तः। अप्रश्नपूर्वके कथने व्यङ्ग्ये व्यवच्छेदे यथा मम—
विकृतिः पूर्वे तन्त्रे मिथ्याभावोक्तिरौपनिषदेषु।
त्वयि शासति नृप! वसुधां नवीनतर्केषु जातिसाङ्कर्य्यम्॥
श्लेषेण सौर्यादिरूपयागादीनाम् उत्पातादीनां चाभेदाध्यवसायेन इतरत्र व्यावृत्तिः। देशादीनां चाभेदाध्यवसायेन इतरत्र व्यावृत्तिः। देशादीनां च व्यवच्छेद्यानामनुपादानम्। तत्रैव—

व्यवच्छेदे वाच्ये यथा—
व्ययाम्बुधि न कोशेषु यो दीनारातिरक्षणम्(१)।
शक्तिं च धर्मचर्यासु श्रद्धे नाङ्गनाश्रये॥
इहापि श्लेषो मूलम्।

तदभावे यथा—
तीर्थं गङ्गा तदितरदपां निर्मलं सङ्गमात्र
देवौ तस्याः प्रसवनिलयौ नाकिनोऽन्ये वराकाः।
सा यत्रास्ते स हि जनपदो मृत्तिकामात्रमन्य-
त्तां यो नित्यं स्मरति स बुधो बोधशून्यस्ततोऽन्यः॥
कारणमाला प्रोक्ता पूर्वं पूर्वं यथोत्तरं हेतौ॥
पूर्वकार्यतापन्नस्योत्तरं प्रति कारणत्वमित्यनया रीत्या हेतवो यत्र वर्ण्यन्ते सा कारणमाला।

---

(१) दीनारातिरक्षणम् दीनानामरातीनां रिपूणां रक्षणम्। दीनाराणां निष्काणाम् अतिरक्षणम्।

यथा मम—

पुण्यं साधुसमागमस्य जनकं साधीयसां सङ्गमा-
त्तात्पर्यप्रतिपत्तिरौपनिषदी सा चेतसः शुद्धये ।
वस्तूनां च ततो विवेचनमतो वैराग्यमस्मान्मनः-
स्थैर्यं तेन तमोलयो विजयते तस्मान्मुदामद्वयम् ॥

अन्योन्यं वस्तूनां परस्परोत्कर्षहेतुत्वे ॥ ३८ ॥

स्पष्टोऽर्थः ।

यथा—

रजनीमवाप्य रुचमाप शशी सपदि व्यभूषयदसावपि ताम् ।
अविलंबितक्रममहो महतामितरेतरोपकृतिमच्चरितम् ॥

उत्तरमात्रात्प्रश्नोन्नयने स्यादुत्तरं नाम ॥

उत्तरश्रवणेन यत्र प्रश्नः कल्प्यते तदुत्तरम् ।

यथा—

अन्येषु पथिक ! पृच्छ व्याधकुटुम्बेषु पृषदजिनम् ।
अस्माकं व्याधयुवा हरिणेषु धनुर्न नामयति ॥

एतद्वाक्येन पृषच्चर्माणि तव किं सन्तीति पथिकवाक्यं कल्प्यते ।

प्रश्ने लोकाविदितोत्तरस्य तच्चासकृत्प्रोक्तौ ॥ ३९ ॥

किंचिद्विषयप्रश्ने सति तदुत्तरत्वेन अप्रसिद्धमेव यदुत्तरं कथ्यते तदप्युत्तरोत्तरम् । एकमात्रोत्तरे चमत्काराभावात्प्रश्नोत्तराणां बाहुल्य एवायमलङ्कारः ।

यथा मम—

समधिकमधुरं किं साधुकाव्यं न दुग्धं
किमतिपृथु गभीरं धीरचित्तं न सिन्धुः ।
किमिह धनमनन्तं कापि विद्या न रुक्म
किमु निधनमकीर्त्तिर्नैव देहावसानम् ।

अत्र काव्यमाधुर्यादेः सहृदयमात्रवेद्यतया लोकाविदितमेवोत्तरम् ।

प्रतिभातिशयाज्ज्ञातो यथाकारेङ्गितादर्थः ॥
विशदीक्रियतेऽन्यस्मै तथैव तत्सूक्ष्ममित्युक्तम् ॥ ४० ॥

आकारादिङ्गिताद्वा सूक्ष्ममर्थं विज्ञाय तद्रीत्यैव यदन्यस्मै तत्प्रकाशनं तत्सूक्ष्मम् ।

यथा—

लोलभ्रूलतया विपक्षदिगुपन्यासे विधूतं शिर-
स्तद्वृत्तान्तनिरीक्षणे कृतचमत्कारो (१)विलक्षः स्थितः।
कोपस्ताम्रकपोलभित्तिनिकषे दृष्ट्या नतः पादयो-
रुत्सृष्टो गुरुसन्निधावपि विधिर्द्वाभ्यां न कालोचितः॥

सारस्तु पूर्वपूर्वादुत्कार्षिण्युत्तरोत्तरे प्रोक्ते॥

पूर्वपूर्वापेक्षयोत्तरोत्तरोत्कर्षकथनं सारः।

यथा—

गौडं राष्ट्रमनुत्तमं निरुपमा तत्रापि राढापुरी
भूरिश्रेष्ठिकनाम धाम परमं तत्रोत्तमो नः पिता॥
तत्पुत्राश्च महाकुला(२)न विदिताः कस्यात्र तेषामपि
प्रज्ञाशिल्पविवेकधैर्यविनयाचारैरहं चोत्तमः॥

हेतुव्यधिकरणं चेत्कार्यं स्यात्सा त्वसङ्गतिः प्रोक्ता॥ ४१॥

कार्यकारणयोरेकदेशत्वं यत्र परित्यज्य कथ्यते साऽसङ्गतिः।

यथा—

सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः
सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयम्॥
साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्भुतम्॥

बाल्यादि नायिकायामप्रागल्भ्यादिकं नायक इति भिन्नदेशत्वम्।

भवति समाधिः सुकरे हेत्वन्तरसमवधानतः कार्ये॥

कारणान्तरसम्पत्त्या यत्र कार्यसौकर्यं स समाधिः।

यथा—

आगतानगणितप्रतियातान् वल्लभानभिसिसारयिषूणाम्।
प्रापि चेतसि सविप्रतिसारे सुभ्रुवामवसरः सरकेण॥

(माघ० स० १० श्लो० २०)

इह नायकावज्ञानजन्यपश्चात्तापरूपाभिसारकारणे सत्यपि मदेन तत्प्रतिबन्धकनिरासादभिसाररूपकार्यसिद्धिः।

केचित्तु—

"इष्टार्थादधिकार्थप्राप्तिः प्रहर्षणम्"

(१) विलक्ष=लज्जित। (२) कस्य न विदिता इत्यन्वयः।

यथा—

उच्चित्य प्रथममधः स्थितं मृगाक्षी
पुष्पौघं श्रितविटपं ग्रहीतुकामा ।
आरूढं पदमदधादशोकयष्टा-
वामूलं पुनरपि तेन पुष्पिताभूत् ॥

उपरिगतकुसुमग्रहणेच्छयाऽशोकवृक्षारोहणे चरणस्पर्शरूपदोहद-वशादनेकपुष्पप्राप्तिरित्याहुः ।

अन्योन्यसङ्गमार्हौ सम्बध्येते समं तत्स्यात् ॥ ४२ ॥

अनुरूपसम्बन्धवर्णनं समालङ्कारः । आनुरूप्यं च द्वेधा सत्त्वा-सत्त्वभेदात् ।

आद्यं यथा—

भवान्धर्मो धर्मप्रवणमतिरेष प्रतिदिनं
भवान्ध्येयो ध्याता पुनरयमनावर्जितमनाः ।
भवान् शास्ता शिष्यः पुनरयमतन्द्रः किमपरं
भवान्सेव्यः सर्वैरुपाधिभिरयं सेवक इति ॥

इह रामसुग्रीवयोः सतोरनुरूपसम्बन्धः ।

द्वितीयो यथा मम—

अर्हसङ्गमविधासु विधातुश्चातुरी कुतुकमातनुते नः ।
यत्कृतं तिमिरमप्युपजीव्यं कौशिकं यदुपजीवकमाक्षि ॥

अत्रान्धकारोलूकनेत्रयोरसतोः ।

द्वयं यथा—

पश्यानुरूपमिन्दिन्दिरेण चूतस्य शेखरो मुखरः ।
अपि च पिचुमन्दमौलौ कपिकुलमाकुलं मिलति ॥

सम्बन्धानुपपत्ताविष्टार्थानाप्त्यनिष्टसम्प्राप्तौ ।
जन्यजनकोभयगुणक्रियाविरोधे च विषमः स्यात् ॥ ४३ ॥

यत्र द्वयोः सम्बन्धोऽननुरूपतया प्रतिपाद्यते स तावत्प्रथमो वि-षमालङ्कारः ।

यथा—

धर्त्तारः प्रलयेषु ये भगवतो वेदस्य विद्येश्वरा-
स्तेषामन्वयसम्भवस्य भवतः स्नातस्य वेदव्रतैः ।

जेतुर्नैव लसन्मनोऽपि तपसा दीप्तस्य राज्ञः सतो

निन्द्या दुश्चरिता च नाभिजननी जाता कथं दुर्मतिः ॥

अत्र रावणस्य दुर्मतिसम्बन्धोऽननुरूपतयोक्तः। यत्रेष्टानवाप्तिरनिष्टलाभश्च स द्वितीयः।

यथा—

पुरस्तस्या गोत्रस्खलनचकितोऽहं नतमुखः

प्रवृत्तो वैलक्ष्यात्किमपि लिखितुं दैवहतकः।

स्फुटो रेखान्यासः कथमपि स तादृक्परिणतो

गता येन व्यक्तिं पुनरवयवैः सैव तरुणी ॥

अत्र नायिकाप्रसादानवाप्तिस्तत्प्रतिपक्षनायिकाभिव्यक्तिरूपानिष्टलाभश्च।

केवलेष्टानवाप्तौ यथा—

तमसि घने विषमे पथि जम्बुकमुल्कामुखं प्रपन्नाः स्मः।

किं कुर्मः सोऽपि सखे! स्थितो मुखं मुद्रयित्वैव ॥

अत्र प्रकाशालाभमात्रम्।

केवलानिष्टप्राप्तौ यथा—

आस्तां वरमवकेशी (१)मा दोहदमस्य रचय पूगतरोः।

एतस्मात्फलितादपि केवलमुद्वेगमवगच्छ ॥

अत्र फलरूपेष्टप्राप्तावपि श्लेषवशादुद्वेगरूपानिष्टप्राप्तिः। कार्यगुणक्रिययोः कारणगुणक्रियाविरुद्धत्वे तृतीयः।

यथा—

आश्चर्यमस्य ककुभामवधिं यदापदाजानुगाद्भुजयुगादुदितः प्रतापः।

व्याप्तस्तदाश्रयविसारितसप्ततन्तुजन्मा चतुर्दश जगन्ति यशःपरश्च ॥

(नै० स० ११ श्लो० १०८)

भुजप्रतापयोः सप्ततन्तुयशसोश्च न्यूनाधिकपरिमाणवर्णनात्तयोर्विरोधः। आजानुगत्वेन भुजस्य सप्ततन्तुपदश्लेषमूलकाभेदाध्यवसानेन यज्ञस्य न्यूनपरिमाणबोधात्। दिगन्तचतुर्दशजगत्प्राप्त्या च प्रतापयशसोर्महत्परिमाणप्रतीतेः।

द्वितीयं यथा—

आनन्दयति प्रत्यास्नायसहस्रसम्प्रदायोऽस्ति।

(१) "वन्ध्योऽफलोऽवकेशी च" इत्यमर।

तज्जन्यस्तु विवर्तः स्वच्छन्दं दन्दहीति कुतः ॥

इहानन्दनतापक्रियोः।

केचित्तु---

इष्यमाणविरुद्धार्थसम्प्राप्तिस्तु विषादनम्।

यथा—

रात्रिर्गमिष्यति भविष्यति सुप्रभातं
भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः।
इत्थं विचिन्तयति कोषगते द्विरेफे
हा हन्त हन्त नलिनीं गज उज्जहार ॥

आधारस्याधेयादाधेयस्यापि वाधारात् ॥
यद्वर्ण्यते महत्त्वं तत्कथयन्त्यधिकमधिकज्ञाः ॥ ४४ ॥

आधेयापेक्षयाधारस्य आधारापेक्षयाधेयस्य वा महत्तया वर्णनमधिकम्।

आद्यं यथा—

कनकाचलजित्वरस्तनीनां तरुणीनामपि यत्र सन्निवेशः।
मनसः परमाणुतां वदन्तः कथमद्यापि न तार्किकास्त्रपन्ते ॥
इह युक्तिपूर्वकं मनसो महत्त्वकल्पनं गम्यते।

द्वितीयं यथा—

दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत-
टङ्कारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः।
द्राक्पर्याप्तकपालसंपुटमिलद्ब्रह्माण्डभाण्डोदर-
भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति ॥

इह ब्रह्माण्डोदरापेक्षयोक्तशब्दस्य महत्त्वं वर्णितम्।

केचित्तु—

अल्पं तु सूक्ष्मादाधेयाद्यदाधारस्य सूक्ष्मता।
मणिमालोर्मिका तेऽद्य करे जपवटीयते ॥

अङ्गुलीयकस्याल्पपरिमाणेऽपि तदपेक्षया करस्य सूक्ष्मत्वं वर्णितमित्यल्पाख्यमलङ्कारान्तरमिति वदन्ति।

आत्मापकारजनकप्रत्यपकारासमर्थेन ।
तत्सम्बन्ध्यपकारे प्राज्ञतमैः प्रत्यनीकमित्युक्तम् ॥ ४५ ॥

विपक्षविजयशक्तिरहितेन यत्र तत्सम्बन्धिनोऽपकारः क्रियते तत्प्रत्यनीकम्। सम्बन्धश्च द्विधा—साक्षात्परम्परा चेति।

तत्र प्रथमं यथा मम—

गिरीन्द्राणां स्थानान्विशदृषदत्यन्तविषमा-
न्प्रदिग्नः सीमानो झटिति समुपारोढुमनसः ।
तदीयप्राणेशै रचितनिजभेदानुशयतो
ध्रुवं सन्ताप्यन्ते त्वदरिदयितास्तिग्मरुचिना ॥

अत्र स्त्रीत्वं साक्षात्सम्बन्धः। विपक्षभूपानामपकारे कर्तव्ये तद्वधूनामपकारोऽत्र वर्णितः।

द्वितीयं यथा ममैव—

कामेन भालनयनोपरि वैरभाजा
प्रालेयशैलदुहितृप्रतिमानशीला ।
त्वं नीयसे कुसुमगात्रि ! शरव्यभावं
कल्पान्तवह्निगततैक्ष्ण्यभृतामिषूणाम् ॥

इहेश्वरे विजेये परम्पराजातसम्बन्धिन्या नायिकाया [illegible]।
शिवस्य पार्वत्यां स्त्रीत्वं तस्याश्च नायिकायां सादृश्यं सम्बन्धः।

सहजानिमित्तजधर्मात्सदृशान्येन वस्तुना वस्तु ।
अपिधीयते यदेतन्मीलितमाहुर्विशेषज्ञाः ॥ ४६ ॥

धर्म्यन्तरवृत्तिधर्मसजातीयेन धर्मेण पदार्थ[illegible] मीलितम्।
धर्मश्च द्विविधः—स्वाभाविक आगन्तुकश्च।

तत्राद्यं यथा मम—

नित्यं चन्दनवारिभिर्मि[illegible]
प्रोद्यद्गन्धनमालिका[illegible]।
अश्रान्तं स्फटिका[illegible]
कश्चिन्माङ्गलिकः [illegible]व्यस्तताम् ॥

इह नगर्यां सहज[illegible]भावः।

द्वितीयं यथा मम—

[illegible] पक्ष्मलाक्षि ! तव ।
[illegible]मेति निरणानि ॥

अत्रागन्तुकेन माणिक्यलौहित्येन तिरस्कृतलौहित्यस्य कोपजन्यत्वज्ञानाभावः।

केचित्तु—

हेतोः कुतोऽपि वैशिष्ट्यस्फूर्तिरुन्मीलितं मतम् ॥

मीलितरीत्या वस्त्वनवगमे प्रसक्ते हेत्वन्तरेण तन्निर्णय उन्मीलितालङ्कारः।

यथा मत्स्यपुराणे—

कोकिलश्चूतशिखरे मञ्जरीरेणुपिञ्जरः।
गुञ्जितैर्व्यक्ततां याति कुलीनश्चेष्टितैरिव ॥

इह कोकिलस्यानवगमे प्रसक्ते कूजितैस्तन्निश्चयः।

प्रथमं विशेषणं चेद्विशेष्यमग्रे भवत्यसकृत्।
विरहप्रतियोगी वा तद्वानेकावलिः सोक्ता ॥ ४७ ॥

पूर्वपूर्वस्योत्तरोत्तरं प्रति विशेष्यत्वं विशेषणत्वं वा यत्र सा एकावली। यत्र च पूर्वं किंचिदभावप्रतियोगित्वेनोक्तस्य वस्तुनः किञ्चिदभावाधिकरणत्वमुच्यते सा एकावली।

विशेष्यत्वं यथा—

आकारसदृशप्रज्ञः प्रज्ञया सदृशागमः।
आगमैः सदृशारम्भ आरम्भसदृशोदयः ॥ (रघु०स०१श्लो०१५)

अत्र दिलीपस्यैव विशेष्यत्वेऽपि सादृश्यादिविशेषणीभूतस्य प्रज्ञादेः प्रथमवाक्ये विशेष्यकोटिप्रवेशात्सत्वात्।

विशेषणत्वं यथा—

चारुता वपुरभूषयदासां तामनूननवयौवनयोगः।
तं पुनर्मकरकेतनलक्ष्मीस्तां मदो दयितसङ्गतिरेनम् ॥
(मा० का० स० १० श्लो० ३३)

इह चारुतादेः पूर्वोक्तस्य उत्तरोक्ते यौवनादौ विशेषणत्वम् ॥

द्वितीया यथा—

न सा सभा यत्र न सन्ति वृद्धा वृद्धा न ते ये न वदन्ति धर्मम्।
नासौ धर्मो यत्र वै नास्ति सत्यं न तत्सत्यं यच्छलेनानुविद्धम् ॥

अभावकोटिनिविष्टानां वृद्धादीनां वृद्धत्वाद्यभावाधिकरणत्वं वर्णितम्।

सदृशज्ञानोद्बोधितसंस्कारमात्रस्मृतिः स्मरणम् ।

अदृष्टादिकृतस्मरणवारणाय—सदृशज्ञानेति ।

यथा—

अवगणितसुरासुरप्रभावं शिशुमवलोक्य तवैव तुल्यरूपम् ।
कुशिकसुतमखद्विषां प्रमाथे धृतधनुषं रघुनन्दनं स्मरामि ॥

इह लवदर्शनोद्बुद्धसंस्कारवशात्सुमंत्रस्य बालावस्थापन्नश्रीरामस्मरणम् । स्मृत्युद्बुद्धसंस्कारजन्यस्मरण—

यथा—

सन्त्येवास्मिञ्जगति बहवः पक्षिणो दिव्यरूपा-
स्तेषां मध्ये मम तु महती वासना चातकेषु ॥
यैरध्यक्षैरथ निजसखं तोयदं स्मारयद्भिः
स्मृत्यारूढं भवति किमपि ब्रह्म कृष्णाभिधानम् ॥

एकसम्बन्धिदर्शनमपरसम्बन्धिस्मारकमिति चातकदर्शनान्मेघस्मरणम् । ततः सादृश्येन भगवतः स्मरणम् ।

तदभाववति मतिस्तत्प्रकारिका भ्रान्तिमान् भवति ॥ ४८ ॥

यो धर्मो यत्र नास्ति तद्धर्मेण तस्य ज्ञानं भ्रमः ।

यथा ममाभिरामराघवे—

पूर्वानेहसि नीललोहितपदोपस्थानपर्वण्ययं
चक्षुर्गोचरतां मुनेरनुभवन् राजन्यसर्गच्छिदः ॥
दोःसाहस्रनिबन्धनाहितभुवा माहिष्मतीवल्लभ-
ज्ञानेनाविलयांबभूव(१)नितरां वृत्तिं तदीयां हृदः ॥

अत्र बाणासुरे जामदग्न्यस्य कार्त्तवीर्यभ्रमः । न च तस्य सर्वज्ञतया कथमेवमिति वाच्यम् । "मुनीनां च मतिभ्रम" इत्युक्तेः प्रणिधानविरहदशायां भ्रमसम्भवात् ।

उपमानानर्थक्यं प्रतीपमस्योपमेयत्वम् ॥

उपमेयेनैव उपमानकार्यनिर्वाह इत्युपमानवैयर्थ्यम्, उपमानस्योपमेयत्वं च यत्र कथ्यते तत्प्रतीपम् ।

आद्यं यथा—

मुखं यदि किमिन्दुना यदि चलाञ्चले लोचने

(१) अविलयांबभूव—कलुषीबभूव ।

किमुत्पलकदम्बकैर्यदि तरङ्गभङ्गी भ्रुवोः ॥
किमात्मभवधन्वना यदि सुसंयताः कुन्तलाः
किमम्बुधरडम्बरैर्यदि तनूरियं किं श्रिया ॥

द्वितीयं द्विधा—उपमितिक्रियानिष्पत्त्यनिष्पत्तिभ्याम् ।

तत्राद्यं यथा—

गोत्रे साक्षादजनि भगवानेष यत्पद्मयोनिः
शय्योत्थायं यदखिलमहः प्रीणयन्ति द्विरेफान् ॥
एकाग्रं यद्दधति भगवत्युष्णभानौ च भक्तिं
तत्प्रापुस्ते सुतनुवदनौपम्यमम्भोरुहाणि ॥

द्वितीयं यथा—

अनेन रम्भोरु ! भवन्मुखेन तुषारभानोस्तुलया धृतस्य ।
ऊनस्य नूनं परिपूरणाय ताराः स्फुरन्ति प्रतिमानखण्डाः ॥

यथा वा—

आस्यं शीतमयूखमण्डलगुणानाकृष्य ते निर्मितं
शङ्के सुन्दरि ! शर्वरीपरिवृढस्तेनैष दोषाकरः ॥
आदायेन्दुमृगादपीह निहितं पश्यामि सारं दृशोः
त्वद्वक्त्रे सति वा विधौ धृतिमयं दध्यादतन्धः कुतः ॥

(नै० स० २२ श्लो० १४७)

चन्द्रमृगनेत्रयोः सारग्रहणाभिधानात्तयोः सादृश्यनिमित्तधर्मविरहवत्ताबोधादुपमेयत्वमपि व्यङ्ग्यम् ।

यथा वा—

अतिदीर्घजीविदोषाद्व्यासेन यशोऽपहारितं हन्त ।
कैर्नोच्येत गुणाढ्यः स एव जन्मान्तरापन्नः ॥

इह व्यासस्य जन्मान्तरापत्तौ तस्य गुणाढ्याभेदारोपविषयित्वाभ्युपगमाद्गुणाढ्यसादृश्यं व्यङ्ग्यम् । न चारोप्यस्योपमानतया गुणाढ्यनिष्ठाभेदप्रतियोगित्वेन व्यासस्याभिमतत्वे तदभावे गुणाढ्यनिष्ठसादृश्यप्रतियोगित्वमेव व्यज्यत इति वाच्यम् । तथा सति तस्य जीवनप्रयुक्तप्रतिष्ठाव्यतिरेकाभिधानानुपपत्तेः ।

स्वगुणसजातीयगुणाश्रयैकरूप्यं तु सामान्यम् ॥ ४९ ॥

एकजातिविगुणवस्तुसम्वलनेन वस्तुनः पृथग्गुणग्रहणं सामान्यम् ।

यथा मात्स्ये-

स्ववर्णसदृशैः पुष्पैः संछन्ना नलिनीवने ।
कान्ता काचिच्चिरात्प्राप्ता कान्तेनान्विष्य यत्नतः (१) ॥

इदं भेदग्रहाभिधानविशिष्टम् । तद्रहितं यथा—

भैमीविनोदाय मुदा सखीभिस्तदाकृतीनां भुवि कल्पितानाम् ।
नातर्कि मध्ये स्फुटमप्युदीतं तस्यानुबिम्बं मणिवेदिकायाम् ॥
( नै० स० ६ श्लो० ७४ )

यथा वा—

प्रवेक्ष्यतः सुन्दरवृन्दमुच्चैरिदं मुदा चेदितरेतरं तत् ।
न शक्ष्यतो लक्षयितुं विमिश्र दस्रौ सहस्रैरपि वत्सराणाम् ॥
( नै० स० १० श्लो० ६२ )

इह सजातीयसम्वलनेन दस्रयोः परस्परविशिष्टानवबोध उक्तः ।

यथा वा—

अस्वां प्रणम्योपनता नताङ्गी नलेन भैमी पथि योगमाप ।
स भ्रान्तिभैमीषु न तां व्यविक्त सा तं च नादृश्यतया ददर्श ॥
( नै० स० ६ श्लो० ४८ )

अत्र नायिकान्तरविशेष्यकारोपप्रकारीभूता भैम्येव विशिष्य स्व-विषयकनिर्णयाभावप्रयोजिकेति विशेषः ।

केचित्तु—

"सामान्यरीत्या विशेषास्फुरणे प्राप्ते कुतश्चित्कारणाद्विशेषस्फूर्तौ विशेषः ।

यथा —

वाराणसीवासवतां जनानां साधारणे शङ्करलाञ्छनेऽपि ।
पार्थप्रहारव्रणकर्कशाङ्ग प्राचीनमीशं प्रकटीकरोति ॥" इत्याहुः ।

स्थितिराधाराभावे वृत्तिरनेकेषु युगपदेकस्य ।
एककरणेन दुष्करकार्यान्तरसिद्धिरिति विशेषः ॥ ५० ॥

प्रसिद्धमाधारं विनाप्याधेयस्य स्थितिकथनमेको विशेषः ।

---

(१) स्वस्य वर्णो गौरः तस्य सदृशैः सुवर्णमयपुष्पैः नायिकाया नलिनीमध्येऽपरिचय नलिनीवने हि देहस्य पलाशाच्छन्नतया मुखदर्शनेन परिचीयेत सुवर्णपद्मपुष्पैर्गौरस्य कमलमनोहरस्य कान्तामुखस्य समाननायिकामुखवस्तुसवलिततया ऐकरूप्यात्तिरोधानादित्याशय ।

यथा—

आनन्दहेतुमपि देवमपास्य नन्दं सक्तासि किं कथय वैरिणि मौर्यपुत्रे ॥
दानाम्बुराजिरिव गन्धगजस्य नाशे तत्रैव किं न चपले प्रलयं गतासि ।

इह नन्दनाशेऽपि तदाश्रिताया लक्ष्म्या अवस्थानम् । उत्तरार्द्धं एकस्याप्यर्थस्य युगपदनेकदशावस्थानवर्णनं द्वितीयः ।

यथा—

पश्यामि तामित इतः पुरतश्च पश्चा-
दन्तर्बहिः परित एव विवर्त्तमानाम् ॥
उद्बुद्धमुग्धकनकाब्जनिभं वहन्ती-
मासक्तितिर्यगपवर्जितदृष्टि वक्त्रम् ॥

अत्रैकस्या मालत्या बहुषु देशेषु वृत्तिः । यत्र चैकार्थसिद्ध्यनुकूल बलादेव दुर्लभार्थान्तरसिद्धिः स तृतीयः ।

यथा मम—

यदि ब्रह्मानन्दो विशदबिसतन्तौ कुशलता-
विशेषेणावेक्ष्यो दृशि विशदताभागपि भृशम् ॥
ततः किं वा कौतूहलमिदमहल्याप्रियतमो
वहत्यध्यक्षं यच्छुकजनयिता जैमिनिरपि ॥

इह ब्रह्मानन्दसरस्वतीदर्शने ईश्वर(व्यास)गौतमजैमिनिप्रत्यक्षसिद्धिः

परकीयगुणतिरोहितगुणस्य भानं तद्गुणः प्रोक्तः ।

वस्त्वन्तरगुणसाक्षात्कारप्रतिबद्धज्ञानस्य वस्तुनो भानं तद्गुणालङ्कारः ।

यथा—

मुक्तं मुक्तागौरमिह क्षीरमिवाभ्रै-
र्वापीष्वन्तर्लीनमहानीलशिलासु ।
शश्वद्रश्मिभिरंशुमिराशु द्रुतमम्भ-
श्छायामच्छामृच्छति नीलीसलिलस्य ॥ (माघ०स० ४ श्लो०४४

अत्र श्वैत्यस्य स्वगुणमपहाय नीलगुणयोगः । केचित्तु-

"पुनः स्वगुणसम्प्राप्तिर्विज्ञेया पूर्वरूपता ॥

तद्गुणरीत्या गुणान्तरग्रहे जाते पुनर्वस्त्वन्तरसान्निध्यानात्स्वगुण प्राप्तिः पूर्वरूपालङ्कार ।

यथा—

विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितः स्फुरन्त्या।
रत्नैः पुनर्यत्र रुचा रुचं स्वामानिन्यिरे वंशकरीरनीलैः॥

(मा० स० ४। श्लो० १४)

इह सूर्यहयानामरुणकान्त्या लौहित्यसम्बन्धे हरिन्मणिकान्त्या पुनर्हरितसम्बन्धः।

**पूर्वावस्थानुवृत्तिश्च विकृते सति वस्तुनि॥**

पूर्वावस्थाविपर्ययेऽपि तादवस्थ्यकथनमपि पूर्वरूपम्।

यथा—

द्वारं खड्गिभिरावृतं बहिरपि प्रस्विन्नगण्डैर्गजै-
रन्तः कञ्चुकिभिः स्फुरन्मणिधरैरध्यासिता भूमयः।
आक्रान्तं महिषीभिरेव शयनं त्वद्विद्विषां मन्दिरे
राजन् कर्ण! चिरन्तनप्रणयिनी शून्येऽपि सैव स्थितिः॥

**प्राक्सिद्धस्वगुणोत्कर्षोऽनुगुणः परसन्निधेः॥**

नीलोत्पलानि दधते कटाक्षैरतिनीलताम्॥

स्वगुणसजातीयगुणवद्वस्तुयोगे तस्य गुणोत्कर्षोऽनुगुणालङ्कार" इत्याहुः।

**अन्यगुणासम्बन्धे प्रकृतस्यातद्गुणः प्रोक्तः॥ ५१॥**

विजातीयगुणवद्वस्त्वन्तरयोगे सत्यपि तद्गुणानन्वयोऽतद्गुणालङ्कारः।

यथा मम—

शेवालैः शवलीकृतापि गुणिताप्यालीमृणालीगणैः
श्रीखण्डस्य निषद्वैरुपनिषद्वारापि सत्यापिता।
राजन्ती यवसारजस्य रजसो राजीभिराजानिकं
राजीवाक्ष! निरागलं जहति मा नाङ्गस्य ते सागरे॥

इह वर्णान्तरयोगसत्त्वेऽपि रागापरित्यागः।

**कार्यान्तरहेतुतयान्येनाभिमताद्विरुद्धकार्यं चेत्।**
**क्रियते परेण तस्माद्व्याघातोऽयं समाख्यातः॥ ५२॥**

अन्यहेतुत्वेन पराभिमतस्य कारणस्य तद्विरुद्धार्थहेतुत्वम् येन यत्र प्रतिपाद्यते स व्याघातः।

यथा—

अचिन्त्योग्रं ज्योतिः किमपि महतामन्धकरिपो-
र्यदक्ष्णोऽभूत्तेजस्तदकृत कथामप्यमदनाम् ।
मुनेर्नेत्रादत्रेर्यदजनि पुनर्ज्योतिरहह
प्रतेने तेनेदं मदनमयमेव त्रिभुवनम् ॥

इह मदननाशहेतुत्वेनाभिमतास्यैव नेत्रजन्यतेजसो मदनजीवनहेतुत्वं वर्णितम् ।

यथा—

त्रैलोक्यत्राणशौण्डः सरसिजवसतेर्यः प्रसूतो भुजाभ्यां
स क्षत्रं नाम वर्णः कुलिशकठिनयोर्यस्य दोष्णोर्विलीनः ।
ज्वालाजिह्वालकालानलकवलभयभ्रान्तदेवासुराणि
व्यातन्वानो जगन्ति ज्वलति मुनिरयं पार्वतीधर्मपुत्रः ॥

इह उत्पादकत्वाभिमतान्नाशोऽभिहितः ।

यथाच—

गौर्याः पुरो वहति यः शिरसैव गङ्गां
विश्रम्भभूमिरयमप्यधिकः परस्याः ।
स्त्रीशब्दमात्रतरले तरुणेन्दुमौलौ
तस्मिन्ममापि सखि ! पाक्षिकलाभशङ्का ॥

अत्र शिवानुरागहेतुत्वेन सख्योपन्यस्तमेव तारल्यं नायिकया तदनुरागहेतुत्वेन कल्पितम् । केचित्तु—

लेशः स्याद्दोषगुणयोर्गुणदोषत्वकल्पनम् ॥

यथा—

अखिलेषु विहङ्गेषु हन्त स्वच्छन्दचारिषु ।
शुक ! पञ्जरबन्धस्ते मधुराणां गिरां फलम् ॥

अत्र दोषप्रभूतमप्यवक्तृत्वं स्वच्छन्दचारानुकूलत्वाद्गुणत्वेन कल्पितम् ।

अपि बत गुरुगर्वं मास्म कस्तूरि ! याया
निखिलपरिमलानां मौलिना सौरभेण ॥
गिरिगहनगुहायां लीनमत्यन्तदीनं
स्वजनकममुनैव प्राणहीनं करोषि ॥

इह कस्तूर्यां सौरभगुण एव दोषत्वेन वर्णितः।

दोषस्याभ्यर्थनानुज्ञा तत्रैव गुणदर्शनात्।

विपदः सन्तु नः शश्वद्यासु सङ्कीर्त्यते हरिः॥

अत्र विपत्तिरूपदोषस्यापि भगवत्सङ्कीर्त्तनानुकूलत्वादिच्छा। एवं दोषविशेषानुबन्धाद्गुणत्वेन प्रसिद्धस्यापि द्वेषः तिरस्कारो नामालङ्कारः।

यथा—

श्रियो मे मा सन्तु क्षणमपि च माद्यद्गजघटा-
मदभ्राम्यद्भृङ्गावलिमधुरसङ्गीतसुभगाः।
निमग्नानां यासु द्रविणरसचर्यासु कुधियां
सपर्यासौकर्यं हरिचरणयोरस्तमयते॥

इह भगवत्सेवाप्रतिकूलतया सम्पदि विद्वेष इति।

संसृष्टिस्तु परस्परमनपेक्षस्थितिरनेकस्य॥

एवं शुद्धालङ्कारा निरूपिताः। यत्र तु परस्परानिरपेक्षा अनेकालङ्कारा एकत्र वर्तन्ते सा संसृष्टिः।

यथा मम—

एकांशेन भवत्कराम्बिततया ब्रह्माद्वयोल्लासिनीं
पीयूषद्रववाहिनीमिव मुदां धारां समुद्भावयन्।
अन्येन त्वदलाभसंवलनया हालाहलेन च्छला-
द्व्यालैरप्यलिकानलैर्विसदृशं वृत्त्यन्तरं निह्नुते॥

अत्रोपमानिह्नवादयः परस्परमनपेक्ष्य वर्त्तन्ते।

एकमपेक्ष्यान्यस्य प्रादुर्भावे तु सङ्करः प्रोक्तः॥ ५३॥

अलङ्कारस्यालङ्कारान्तरसापेक्षत्वे सङ्करः।

यथा मत्स्यपुराणे—

शुकैर्यत्र विहन्यन्ते पद्मरागविनिर्मिताः।
भित्तयो दाडिमभ्रान्त्या प्रतिदिग्धितमौक्तिकाः॥

इहोदात्तमपेक्ष्य भ्रान्तिमदुन्मेषः।

साधकबाधकमानाभावाच्चैकस्य निर्णयाभावे॥

यत्रान्यतरालङ्कारानिर्णयविरहस्तत्र सन्देहरूपः सङ्करः।

यथा मम--

न प्राचीनपरम्परापरिचयो बाल्ये न वा सौहृदं
नैकस्यां भुवि सम्भवो न च समं वासो न सेवालयः।
इत्यादीनि न दूषणानि गणयस्यम्भोज! भृङ्गस्य य-
त्नैसर्गिकमव्यपेक्षमुदयत्यौदार्यमत्युज्ज्वलम् ॥

अत्र प्रस्तुतकमलप्रस्तावेन अप्रस्तुतसत्पुरुषप्रतीतेः समासोक्तिः, किं वा अप्रस्तुतवृत्तान्तेन प्रस्तुतसत्पुरुषप्रतीतेरप्रस्तुतप्रशंसेति सन्देहः।

एकपदाच्छब्दार्थालङ्कृत्योरवगतावन्यः ॥ ५४ ॥

एकपद एव शब्दालङ्कारार्थालङ्कारयोरवगम्यमानत्वे एकाश्रयानुप्रवेशलक्षणः सङ्करः।

यथा--

कैलासाद्रितटीषु धूर्जटिजटालङ्कारचन्द्राङ्कुर-
ज्योत्स्नाकन्दलिताभिरिन्दुदृषदामाद्भिर्नदीमातृकाः।
गौरीहस्तगुणप्रवृद्धवपुषः पुष्यन्ति धात्रेयक-
भ्रातृस्नेहसहोढषण्मुखशिशुक्रीडासखाः शाखिनः ॥

इहानुप्रासोदात्तयोः।

रसभावतदाभासे रसवत्प्रेय ऊर्जस्वी।
भावशमे तु समाहितमुदयेऽन्योऽप्यस्य शबलत्वे ॥ ५५ ॥

प्रसङ्गेन रसालङ्कारा अप्युदाहियन्ते। तत्र रसस्याङ्गत्वेन रसवदलङ्कारः। भावस्य तथात्वे प्रेयोऽलङ्कारः। रसाभासभावाभासयोस्तथात्वे ऊर्जस्विसंज्ञः। भावशान्तेस्तथात्वे समाहितसंज्ञः। भावोदयभावशबलत्वयोः अपिशब्दोपात्तस्य च भावसन्धेस्तथात्वे विशेषसंज्ञानभिधानात्तत्तत्संज्ञमेवालङ्कारत्रयम्।

तत्राद्यो यथा--

तीक्ष्णैस्तिग्मरुचः करैः परिचितां सेक्तुं कपोलस्थलीं
नीराणां निकरं करेण हरता तुच्छीकृते वारिधौ।
मैनाकं समुदीक्ष्य पङ्कयति तं शालूकशङ्काजुषो
हेरम्बस्य पुनातु दन्तशिखरस्यापारलीलारसः ॥

अत्राद्भुतस्य लम्बोदरविषयकभावाङ्गत्वम्।

द्वितीयो यथा—

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ।

(शाकुं० अं० ४ श्लो० ९)

इह शकुन्तलानिष्ठवृक्षविशेष्यकभावः कविनिष्ठशकुन्तलाविषयकभावस्याङ्गम् ।

तृतीयो यथा मम—

अहल्याविश्लेषज्वरजनितशल्यानवयवा-
न्वहन्वाहिर्मुख्यावहितबहलव्यूहमहसः ।
प्रणिन्ये दिङ्मुद्रान्वयधूतघनत्वैरपवनै-
र्बलारिः पौलोमीमनुशयमयं वह्निशयनम् ॥

अत्राहल्याविषयक इन्द्रनिष्ठविप्रलम्भो मुनिपत्नीगतत्वेन रसाभास इन्द्राणीनिष्ठेन्द्रविषयकेर्ष्यायाः ।

चतुर्थो यथा—

इयमियं मयदानवनन्दिनी त्रिदशनाथजितः(१) प्रसवस्थली ।
किमपरं दशकन्धरगेहिनी त्वयि करोति करद्वययोजनम् ॥

इह मन्दोदरीनिष्ठरामविषयकभावो वैरिविषयत्वादाभासो वक्तृनिष्ठरामविषयकभावस्य ।

पञ्चमो यथा—

विरोधो विश्रान्तः प्रसरति रसो निर्वृतिघन-
स्तदौद्धत्यं क्वापि व्रजति विनयः प्रह्वयति माम् ।
झटित्यस्मिन् दृष्टे किमपि परवानस्मि यदि वा
महार्हस्तीर्थानामिव हि महतां कोऽप्यतिशयः ॥

( उत्त० अं० ६ श्लो० ११ )

इह लवस्यामर्षरूपभावोपशमो रामविषयकभावस्य ।

षष्ठो यथा—

भवति न तथा भानोः शिष्ये गुरौ वसतो न च
स्वयमपि मुनौ विश्वामित्रे गृहानधितिष्ठति ।

---

( १ ) त्रिदशनाथजित=इन्द्रजित ।

दशरथसुतावेतौ दृष्ट्वा यथोच्छ्वसितं मनः
शिथिलयति मे प्रत्यग्ज्योतिः प्रबोधसुखासिकाम् ॥

अत्र जनकस्य हर्षादैयो रामविषयकभावस्य ।

सप्तमो यथा—

यथेन्दावानन्दं भजति समुपोढे कुमुदिनी
तथैवास्मिन्दृष्टिर्मम कलहकामः पुनरयम् ।
झणत्कारक्रूरक्वणितगुणगुञ्जद्गुरुधनु-
र्धृतप्रेमा बाहुर्विकटविकरालव्रणमुखः ( उत्त० अं० ५ श्लो० २६)
इह लवस्य हर्षक्रोधयोः सन्धिर्वीरस्य ।

अष्टमो यथा मम—

अप्यादर्जगतां नवो लवणिमा सीदन्ति गात्राणि किं
रज्यन्ते न हि मानसानि विषये प्रत्यङ्निरुद्धात्मनाम् ।
धिग्वृत्तिं मनसः स्पृहातरलितां लभ्येत वायं मया
प्रेयानित्यचलाधिराजदुहितुश्चिन्ता चिरं पातु वः ॥

अत्र जगदम्बिकायाः शिवदर्शने विस्मयभ्रममतिनिर्वेदोत्कण्ठानां शबलत्वं कविनिष्ठगौरीविषयकभावस्याङ्गमिति सर्वं शिवम् ॥

हृद्यावधानतरलामवदातवृत्तां मुक्तावलीं गुणगणैर्ग्रथितामनर्घ्यैः ।
कण्ठे निधाय विबुधा बहुधा वहन्तु शश्वत्सभाजनसभाजनभाजनत्वम् ॥
श्रीमन्महीमाहिततत्तदसीमधीमन्मूर्द्धन्यताकलनसङ्गतधन्यताकः ॥
लक्ष्मीधरो यमुदसूत मुदं प्रसूनां विश्वेश्वरस्य कृतिरस्य चिरस्य लोके ॥

इति श्रीलक्ष्मीधरपण्डितसूनुश्रीविश्वेश्वरपण्डितविरचिता
अलङ्कारमुक्तावली समाप्ता ॥

अलङ्कारमुक्तावलीस्थोदाहरणश्लोकानामकारादिक्रमेण

# अनुक्रमणिका।

अनुक्रमणिका ।

## अनुक्रमणिका।

इति ।

# काशीसंस्कृतसीरीज़्–पुस्तकमाला ।

इयं काशी—संस्कृतग्रन्थमाला विभागश. प्रकाशिता भवति । एतस्यां प्राचीनाः नवीनाश्च दुर्लभाः सुलभाश्च अत्युपयुक्ता. संस्कृतग्रन्था काशिकराजकीयसंस्कृतपाठशालीयैः पण्डितैरन्यैरपि विद्वद्भिः संशोधिता. क्रमेण संमुद्रिता भवन्ति । अस्या प्रकाश्यमाणाना ग्रन्थाना मूल्यं सूचीपत्रे प्रकाशितं वर्तते । परतु एतस्या नियमेनाऽविच्छिन्नतया निश्चितग्राहकमहाशयाना प्रतिमुद्राशतकं पञ्चविंशतिमुद्रा' ( कमिशन ) परावर्तिता भवेयु' मार्गव्ययश्च न पृथक् दातव्यो भवेत् ।

| तत्र मुद्रितग्रन्थनामानि । | मूल्यम् । |
|---|---|
| १ नलपाकः नलविरचितः । संपूर्णः ( पाकशास्त्रम् १ ) | रु० १—८ |
| २ संक्षेपशारीरकम् । रामतीर्थस्वामिकृतान्वयार्थबोधिनीटीकासहितम् । ( वेदान्तं १ ) | रु० ८—० |
| ३ वैशेषिकदर्शनम् । पं० श्रीढुण्ढिराजशास्त्रिकृतविवरणोपेताभ्यां प्रशस्तपादभाष्योपस्काराभ्यां समन्वितम् (वैशेषिक१) | रु०२—८ |
| ४ श्रीसूक्तम् । विद्यारण्यपृथ्वीधरश्रीकण्ठाचार्यकृतभाष्यत्रयेण टिप्पण्या च समलङ्कृतम् । ( वैदिकं १ ) | रु० ०—६ |
| ५ लघुशब्देन्दुशेखरः ( भैरवी ) चन्द्रकलाटीकासहितः तत्पुरुषादिसमासपर्यन्तः । ( व्याकरणं १ ) | रु० ८—० |
| ६ कारिकावली मुक्ता० दिन० राम० शब्दखण्डसहिता तथा "गुणनिरूपणदिनकरीय" महामहोपाध्याय पं० श्रीलक्ष्मणशास्त्रिकृतव्याख्यासहिता । ( न्यायं १ ) | रु० ६—० |
| ७ पञ्चकिरणम् । वार्तिकाभरणालङ्कृतवार्तिकटीकया–तत्त्वचन्द्रिकासमवेतविवरणेन च समन्वितम् । ( वेदान्तं २ ) | रु० ०—८ |
| ८ अलङ्कारप्रदीपः । पण्डितवरविश्वेश्वरपाण्डेयनिर्मितः । | रु० ०—८ |
| ९ अनङ्गरङ्गः महाकविकल्याणमल्लविरचितः । (कामशास्त्रं१) | रु० ०—१२ |
| १० जातकपारिजातः । श्रीवैद्यनाथशर्मणा विरचितः । (ज्यो० १) | रु० २—० |
| ११ पारस्करगृह्यसूत्रम् । कात्यायनसूत्रीयश्राद्ध–शौच–स्नान–भोजन–कल्पसहितम् । ( कर्मकाण्डम् १) | रु० ०—८ |
| १२ पुरुषसूक्तम् । सायणभाष्य–महीधरभाष्य–मगलभाष्य–निम्बार्कमतभाष्यचतुष्टयसहितम् । ( वैदिकं २ ) | रु० १—४ |
| १३ श्रीमत्सनत्सुजातीयम्—श्रीमच्छङ्करभगवत्पादविरचितभाष्येण नीलकण्ठीव्याख्यया च सवलितम् । ( वेदान्तं ३ ) | रु० १—४ |
| १४ कुमारसंभवं महाकाव्यम् । महाकवि–श्रीकालिदासवि० । सञ्जीवनी–शिशुहितैषिणी–टीकाद्वयोपेतम् सम्पूर्णम् । (काव्यं२) | रु० १—८ |

१५ श्रुतबोधश्छन्दोग्रन्थः । आनन्दवर्द्धिनीतात्पर्यप्रकाशाख्यसंस्कृत-भाषाटीकासहितः। (छंदः १) रु० ०—६

१६ कारिकावली । मुक्तावली-न्यायचन्द्रिकाटीकाद्वयसहिता सटिप्पणा। (न्यायं २) रु० १—०

१७ पारस्करगृह्यसूत्रम् । काण्डद्वये हरिहर-गदाधर० तृतीयकाण्डे हरिहर-जयराम-प्रणीतभाष्येण समलङ्कृतम् । हरिहरभाष्यसहितस्नानत्रिकण्डिकासूत्र—गदाधरभाष्यसहितश्राद्धनवकण्डिकासूत्रैः यमलजननशान्ति-पृष्ठोदिवि-शौच-भोजन—कामदेवकृतभाष्यसहितोत्सर्गपरिशिष्टसूत्रैः परिष्कृतं-टिप्पण्यादिभिः सहितं च। (कर्मकाण्डं २) रु० ३—०

१८ संक्षेपशारीरकम्-मधुसूदनीटीकासहितम् संपूर्ण (वेदान्तं४) रु० ८—०

१९ लघुजूटिका-अर्थात् अभिनवा परिभाषेन्दुशेखरपरिष्कृतिनिर्मितिः। (व्याकरणं २) रु० ०—८

२० कातीयेष्टिदीपकः । (दर्शपौर्णमासपद्धतिः) महामहोपाध्याय-पं० श्रीनित्यानन्दपन्तपर्वतीयविरचितः । (कर्मकाण्डं) रु० १—०

२१ सप्तपाठि-श्रीशिवमहिम्नस्तोत्रम् श्रीगन्धर्वराज पुष्पदन्ताचार्यविरचितम् । हरिहरपक्षीय-मधुसूदनीटीकया (संस्कृतटीका-संस्कृतपद्यानुवाद-भाषाटीका-भाषापद्यानुवाद-भाषाबिम्ब) पञ्चमुखीनाम्न्या टीकया-शक्तिमहिम्नस्तोत्रेण च समन्वितम् । (स्तोत्रवि० १) रु० १—०

२२ बौद्धाऽऽचार्यश्रीधर्मकीर्तिप्रणीतः सटीकन्यायबिन्दुः—भाषाटीकासहितः (बौद्धन्याय वि० १) रु० १—८

२३ सपरिष्कृत-दर्पणसहितवैयाकरणभूषणसारः (व्याकरणं ३) रु० ४—०

२४ न्यायवार्त्तिकतात्पर्य्यटीका श्रीवाचस्पतिमिश्रविरचिता । सम्पूर्ण (न्यायविभाग ३) रु० ६—०

२५ मीमांसान्यायप्रकाशः (आपदेवीयः) श्रीचिन्नस्वामिशास्त्रिकृतया सारविवेचिन्या व्याख्यया सहितः (मीमांसा १) रु० २—०

२६ पौरोहित्यकर्मसारः (टिप्पणीसमलंकृतः) प्रथमो भागः श्रीरमाकान्तशर्मणा संगृहीतः। (कर्मकाण्डवि० ३) रु० ०—४

२७ लघुशब्देन्दुशेखरः म० म० श्रीनागेशभट्टविरचितः। अव्ययीभावान्तो भागः, म०म० पण्डित श्रीनित्यानन्दपन्त-पर्वतीयकृतशेखरदीपकाख्येन टिप्पणेन समुज्ज्वलितः। (व्या०४) रु० ४—८

२८ रघुवंशमहाकाव्यम् । महाकविश्रीकालिदासविरचितम् पञ्चसर्गात्मकम् । म० म० श्रीमल्लिनाथसूरिकृतसञ्जीविनीटीकया पं० श्रीकनकलालठक्कुरकृताऽर्थप्रकाशिकाटीकया च समलङ्कृतम् (काव्यवि० ३) रु० ०—१२

२९ कामसूत्रम् । श्रीवात्स्यायनमुनिप्रणीतं बहुयत्नरासादितथा पूर्णया जयमङ्गलरचितया टीकया समेतम् । बहुखण्डितपाठान् परिपूर्य,सूत्राङ्कांश्च संयोज्य, परिष्कृत्य संशोधितम् । (काम०२) रु० ८—०

३० न्यायकुसुमाञ्जलीः । न्यायाचार्यपदाङ्कितश्रीमदुदयनाचार्यविरचितः । महामहो पाध्यायरुचिदत्तकृतमकरन्दोद्भासितमहामहो पाध्याय वर्द्धमनोपाध्यायप्रणितप्रकाशसाहतः (न्यायं४) रु० ६—०

३१ परिभाषेन्दुशेखरः । म० म० श्रीनागेशभट्टरचितः । म० म० भैरवमिश्रविरचितया भैरवीत्यपराख्यया परिभाषाविवृत्या-तत्त्वप्रकाशिकया टीकया च सहितः । (व्याकरणं ४) रु० ३—०

३२ अर्थसंग्रहः । पूर्वमीमांसासारसंग्रहरूपः । श्रीलौगाक्षिभास्करविरचितः। श्रीमत्परमहंसपरिव्राजकाचार्यश्रीरामेश्वरशिवयोगिभिक्षविरचितमीमांसार्थकौमुद्याख्यव्याख्यासहितः।(मीमां०२) रु०१—०

३३ न्यायवार्त्तिकम् न्यायदर्शनवात्स्यायनाभाष्योपबृंहणम् । परमर्षि भारद्वाजोद्द्योतकरविरचितम् । महर्षि-गोतमादिचरितसम्वलितबृहत्भूमिकासहितम् । (न्यायं । रु० ६—०

३४ शुक्लयजुर्वेदसंहिता । वाजसनेयिमाध्यन्दिनशाखीया । श्रीमदुव्वटाचार्यविरचितमन्त्रभाष्येण श्रीमन्महीधराचार्यविरचितवेददीपेन च सहिता । ( भाग १-२-३-४ ) (वैदिकं ३) रु० ८—०

३५ शुक्लयजुर्वेदकाण्वसंहिता । श्रीसायणाचार्यविरचितभाष्यसहिता । १ अध्यायादारभ्य २० अध्यायपर्यन्ता । (वैदिकं ४) रु० ६—०

३६ सिद्धान्तलेशसंग्रहः । श्रीमदप्पयदीक्षितविरचितः । श्रीमत्परमहंसपरिव्राजकाचार्यकृष्णानन्दतीर्थविरचितया कृष्णालङ्काराख्यया व्याख्यया समलंकृतः । (वेदान्तं ४) रु० ६—०

३७ काशिका । श्रीपाणिनिमुनिविरचितव्याकरणसूत्राणां वृत्तिः विद्व्हर-वामन-जयादित्यविनिर्मिता । (व्याकरणं ५) रु० ६—०

३८ प्राकृतप्रकाशः । भामहकृतः । श्रीमद्वररुचिप्रणीतप्राकृतसूत्रसहितः । टिप्पण्या च संयोजितः । (व्याकरणं ६) रु० १—४

३९ जीवन्मुक्तिविवेकः श्रीमद्विद्यारण्यस्वामिविरचितः । भाषानुवादसमेतः । (वेदान्तं ५) रु० २—०

४० श्रीनारदीयसंहिता । ब्रह्मणोपदिष्टो नारदमहामुनिप्रोक्तो ज्यौतिषग्रन्थः । (ज्योतिषं २) रु० ०—६

४१ मेदिनीकोशः-मेदिनीकारविरचितः । (कोशं १) रु० १—८

४२ मीमांसादर्शनम् । श्रीशबरस्वामिविरचितभाष्यसहितम् । ( भाग१—२ ) (मीमांसा ३) रु० १०—०

पत्रादिप्रेषणस्थानम्

जयकृष्णदास—हरिदासगुप्तः,
चौखम्बा संस्कृत सीरीज आफीस,
विद्याविलास प्रेस, गोपालमंदिर के उत्तर फाटक
बनारस सिटी ।

हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़्पुस्तकमालायाः
८
काव्यविभागे (१) प्रथमपुष्पम् ।

# अलङ्कारप्रदीपः

पर्वतीय-विश्वेश्वरपाण्डित —
विरचितः ।

नेपालदेशीय—
विष्णुप्रसादभण्डारिणा
संशोधितः ।

काशीस्थ-
चौखम्बासंस्कृतपुस्तकालयस्वामिना श्रेष्ठिकुलभूषण-
हरिदासगुप्तात्मजेन जयकृष्णदासगुप्तमहोदयेन
विद्याविलासनाम्नि यन्त्रालये
मुद्रयित्वा प्रकाशितम् ।
सन् १९२३

# अलङ्कारप्रदीपः

कुवलयानन्दादिसदृशः केवलार्थालङ्कारनिरूपकोऽयं प्रबन्धः। अस्य च कर्ता सर्वतन्त्रस्वतन्त्रपाण्डितीको नानानिबन्धकर्ता कूर्माचलदेशीयः पाण्डेयकुलभूषणो विश्वेश्वरावतारो विश्वेश्वरपण्डितः। अस्य समयादीतिवृत्तं मुद्रयिष्यमाणेतदीयनिबन्धान्तरे यथावसरं निवेशयिष्यत इति तत एवावगन्तव्यम्। अत्र च ग्रन्थकर्त्रा सरलैः सङ्क्षिप्तैः सूत्रभूतैर्वाक्यैरलङ्कारलक्षणानि तथा प्रतिपादितानि यथा सुकुमारमतयोऽपि क्लेशलेशं विनाऽलङ्कारतत्त्वमवबुध्येयुः। उदाहृतानि स्वकृतान्येव पद्यानि, अव्याप्त्यतिव्याप्तिबाध्यबाधकभावादिगहनः शास्त्रीयो विचारो न प्रचारित इति च विशेषः।

अत्र (      ) एतच्चिह्नमध्यपातिन्यः पङ्क्तय आदर्शपुस्तकेऽविद्यमाना अप्यपेक्षिता इति स्थापिताः।

आदर्शपुस्तकस्य नातिशुद्धस्यैकस्यैव लाभात्तदाधारेण मुद्रयितुमारब्धे सपरिश्रमं परिशोधितेऽप्यस्मिन् मानुष्यकनान्तरीयेषु स्खलितेषु भवन्तु क्षमाशीला ग्रन्थतत्त्वमात्रग्रहिलाः सहृदया इति

निवेदयते—

काशी<br>
३०-४-२३

नेपालदेशीयो<br>
विष्णुप्रसादभण्डारी।

अलङ्कारप्रदीपस्थालङ्काराणामकारादिक्रमेण—

## सूची

अलङ्कारप्रदीपस्थोदाहरणपद्यानामकारादिक्रमेणानु-

# क्रमणिका।

# शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पृ० | पं० |
| --- | --- | --- | --- |
| ईर्ष्याकषायितं तत्र | ईर्ष्याकषायितमपि तैं | २० | १७ |
| मुदा | 'मुदे' | ,, | २० |
| क्रियादीपकम् | कारकदीपकम् | २१ | १४ |
| निंमाय | निर्माय | २७ | १ |
| त्तिानिर्देशः । क्रमेण | त्तिः । निर्देशक्रमेण | ,, | ४ |
| त्कारैक | त्कार्यैक | ३० | १३ |

अलङ्कारप्रदीपस्थानि

# अलङ्कारसूत्राणि।

चमत्कारप्रयोजकं सादृश्यवर्णनमुपमा ॥ १ ॥

एकस्मिन्नुपमेये बहूपमानसादृश्य मालोपमा ।

पूर्वपूर्वोपमायामुपमेयस्योत्तरोत्तरोपमायामुपमानत्वेन कथनं रशनोपमा ।

आरोप्यस्यारोपविषयतादात्म्यापत्त्या प्रकृतोपयोगः परिणामः ॥ २ ॥

सामान्येन निरूपितस्य विशेषेण निरूपणमुदाहरणम् ॥३॥

उपमानोपमेययोर्ज्ञायमानमैक्यमनन्वयः ॥ ४ ॥

सर्वथैवोपमाननिषेधोऽसमः ॥ ५ ॥

परस्परसादृश्यमुपमेयोपमा ॥ ६ ॥

प्रकृतेऽप्रकृततादात्म्यसम्भावनमुत्प्रेक्षा ॥ ७ ॥

सादृश्यनिबन्धनः प्रकृतसंशयः सन्देहः ॥ ८ ॥

संशयोत्तरमानिर्णये ऊहो वितर्कः ॥ ९ ॥

विरुद्धयोः पाक्षिकी प्राप्तिर्विकल्पः ॥ १० ॥

उपमेये उपमानतादात्म्यारोपो रूपकम् ॥ ११ ॥

सर्वेषामारोप्यारोपविषयाणां शब्दोपात्तत्वे समस्तवस्तुविषयम् ।

यत्र केचिदिच्छावहाः केचिदार्थास्तदेकदेशविवर्ति ।

एकस्मिन्नुपमेये बहूपमानतादात्म्यारोपो मालारूपकम् ।

आरोपान्तरसापेक्ष आरोपः परम्परितम् ।

प्रसिद्धक्रमाणामेकत्रोपनिबन्धनं रत्नावली ॥ १२ ॥

प्रकृतनिषेधविशिष्टस्तदन्यारोपोऽपह्नुतिः ॥ १३ ॥

स्वकीयतात्पर्य्यख्यापनेन परभ्रान्तिखण्डनं भ्रान्त्यपह्नुतिः।

परकीयप्रमाखण्डनाय स्वतात्पर्यस्यान्यथाकरणं छेकापह्नुतिः ।

अप्रकृतनिषेधविशिष्टप्रकृतस्थापनं निश्चयः ॥ १४ ॥

शब्दैक्ये सत्यनेकार्थकथनं श्लेषः ॥ १५ ॥

प्रकृतवृत्तान्तेनाप्रकृतप्रतीतिः समासोक्तिः ॥ १६ ॥

अन्वयानुपपत्त्या सादृश्यपर्यवसानं निदर्शना ॥ १७ ॥

क्रियया हेतुहेतुमद्भावप्रतीतिर्द्वितीया निदर्शना ।

प्रकृतमनुपन्यस्य तत्स्थानीयवाक्यार्थान्तरोपन्यासो ललितम् ॥ १८ ॥

अप्रकृतवृत्तान्तेन प्रकृतप्रतीतिरप्रस्तुतप्रशंसा ॥ १९ ॥

प्रस्तुतवृत्तान्तेन प्रस्तुतप्रतीतिः प्रस्तुताङ्कुरः ॥ २० ॥

प्रस्तुताप्रस्तुतयोः सर्वथैवाभेदप्रतीतिरातिशयोक्तिः ॥२१॥

तस्यैवान्यत्वाभिधानं भेदकातिशयोक्तिः ।

असम्बन्धे सम्बन्धकल्पनं सम्बन्धातिशयोक्तिः ।

सम्बन्धेऽप्यसम्बन्धकथनं द्वितीयाऽसम्बन्धातिशयोक्तिः।

कार्यकारणयोर्यौगपद्यमक्रमातिशयोक्तिः ।

हेतुप्रसक्तावेव कार्योत्पत्तिकथनं चपलातिशयोक्तिः ।

कारणात्प्रागेव कार्योत्पत्तिकथनमत्यन्तातिशयोक्तिः ।

केन चिदापादकेन कस्य चिदापादनं सम्भावनम् ॥२२॥

कस्य चिदर्थस्य मिथ्यात्वसिद्धये मिथ्याभूतार्थान्तरोप-
न्यसनं मिथ्याध्यवसितिः ॥ २३ ॥

उत्कर्षानुपपादनेऽप्युत्कर्षहेतुत्वकथनं प्रौढोक्तिः ॥२४॥

कार्यकारणयोरभेदाभिधानं हेतुः ॥ २५ ॥

हेतुहेतुमद्भाववर्णनं द्वितीयो हेतुः ।

एकस्यानेकसमवेतभिन्नभिन्नप्रकारकज्ञानविषयत्ववर्णन-
मुल्लेखः ॥ २६ ॥

एकस्याप्येकवृत्त्यनेकप्रकारकज्ञानविषयत्ववर्णनमपर
उल्लेखः ।

साम्याभिप्रायके वाक्यद्वये एकधर्मोपादानं प्रतिवस्तूपमा २७

तत्रैव बिम्बप्रतिबिम्बभावेन भिन्नधर्मोपादानं दृष्टान्तः।२८।

प्रकृताप्रकृतानामेकधर्मान्वयो दीपकम् ॥ २९ ॥

एककारकस्यानेकक्रियान्वयः कारकदीपकम् ।

रूपान्तरेण पूर्वोक्तस्य उत्तरत्रान्यरूपेणान्वयो मालादीपकम्॥

क्रियाया द्विरभिधानमावृत्तिः ( त्तिदीपकम् ) ॥३०॥

प्रकृतानामप्रकृतानामेव वा एकधर्मान्वयस्तुल्ययोगिता३१।

सपक्षविपक्षयोर्वृत्तिसामान्यमन्या तुल्ययोगिता ।

उपमानादुपमेयस्योत्कर्षवर्णनं व्यतिरेकः ॥ ३२ ॥

अभिधातुमिष्टस्यापि विशेषलाभार्थो निषेध आक्षेपः ॥३३॥

उपमेयेनोपमानवैयर्थ्योक्तिरन्य आक्षेपः ।

अर्थान्तरतात्पर्यको निषेधोऽपर आक्षेपः ।

निषेधफलको विधिराक्षेपान्तरम् ।

विना हेतुं कार्योत्पत्तिर्विभावना ॥ ३४ ॥

हेतुसत्त्वेऽपि कार्यानुक्तिर्विशेषोक्तिः ॥ ३५ ॥

निर्देशक्रमेण पदार्थान्वयो यथासङ्ख्यम् ॥ ३६ ॥

सामान्यविशेषाभ्यां विशेषसामान्यसमर्थनमर्थान्तरन्यासः ३७

विशेषसमर्थकस्य सामान्यस्य विशेषान्तरेण समर्थनं विकस्वरः ॥ ३८ ॥

आपाताद्विरोधभानं विरोधाभासः ॥ ३९ ॥

रम्यस्वभाववर्णनं स्वभावोक्तिः ॥ ४० ॥

स्तुतिनिन्दातात्पर्यकनिन्दास्तुत्यभिधानं व्याजस्तुतिः ४१॥

अन्यनिन्दया अन्यनिन्दाभिव्यक्तिर्व्याजनिन्दा ॥ ४२ ॥

उभयोश्चमत्कार्यैकधर्मान्वयः सहोक्तिः ॥ ४३ ॥

किञ्चिद्विना कस्यचिदप्राशस्त्यप्राशस्त्यान्यतराभिधानं विनोक्तिः ॥ ४४ ॥

नित्यसम्बन्धानामसम्बन्धवचनमन्या विनोक्तिः ।

किञ्चिद्दत्त्वा कस्याचिदुपादानं परिवृत्तिः ॥ ४५ ॥

भूतभाविविशेषप्रत्यक्षं भाविकम् ॥ ४६ ॥

हेतूक्तिः काव्यलिङ्गम् ॥ ४७ ॥

वाच्यस्यापि भङ्ग्यन्तरेणाभिधानं पर्यायोक्तम् ॥ ४८ ॥

व्याजेनेष्टसाधनं द्वितीयं पर्यायोक्तम् ।

आनुकूल्यपर्य्यवसायिप्रातिकूल्यमनुकूलम् ॥ ४९ ॥

वस्तुनोऽतिशयविशेषकथनमुदात्तम् ॥ ५० ॥

महतामङ्गत्वकथनं द्वितीयमुदात्तम् ।

अद्भुतशौर्यादिवर्णनमत्युक्तिः ॥ ५१ ॥

एकहेतुत्वेऽपि हेत्वन्तरोक्तिः समुच्चयः ॥ ५२ ॥

गुणक्रियायौगपद्यमपरः समुच्चयः ।

एकस्यानेकत्रानेकस्यैकत्र वा क्रमेण वृत्तिः पर्य्यायद्वयम् ५३

व्याप्येन व्यापकज्ञानमनुमानम् ॥ ५४ ॥

चमत्कारिसाक्षात्कारः प्रत्यक्षम् ॥ ५५ ॥

अतिदेशवाक्यार्थजन्यं ज्ञानमुपमितिः ॥ ५६ ॥

आप्तवाक्यं शब्दः ॥ ५७ ॥

उपपाद्येनोपपादककल्पनमर्थापत्तिः ॥ ५८ ॥

प्रतियोगिभिन्नायां प्रतियोगिप्रत्यक्षसामग्र्यां सत्यां प्रति-

योगिनोऽप्रत्यक्षमनुपलब्धिः ॥ ५९ ॥

सम्भवः ॥ ६० ॥

अदृष्टवक्तृकः प्रवाद एवैतिह्यम् ॥ ६१ ॥

साभिप्रायविशेषणत्वं परिकरः ॥ ६२ ॥

विशेष्यस्य साभिप्रायकत्वं परिकराङ्कुरः ॥ ६३ ॥

रहस्यप्रकाशप्रतिबन्धकवाक्यं व्याजोक्तिः ॥ ६४ ॥

तादृशी क्रिया युक्तिः ॥ ६५ ॥

ज्ञातपररहस्यप्रकाशनं पिधानम् ॥ ६६ ॥

प्रतिभया ज्ञातस्यार्थस्यान्यानवगम्यप्रकारेण प्रकाशनं सूक्ष्मम् ॥ ६७ ॥

अन्यतात्पर्य्येणान्यं प्रति कथनं (गूढो) गुच्छोक्तिः॥६८॥

गुप्तार्थस्य कविना स्फुटीकरणं विवृतोक्तिः ॥ ६९ ॥
लोकप्रवादानुकारो लोकोक्तिः ॥ ७० ॥
अर्थान्तरगर्भा लोकोक्तिरेव छेकोक्तिः ॥ ७१ ॥
( एकेनान्याभिप्रायेणोक्तं वाक्यं यद्यन्येनान्याभिप्रायकं कल्प्यते तदा वक्रोक्तियोगाद्वक्रोक्तिः ॥ ७२ ॥ )
नाम्नामवयवार्थान्तरकल्पनं निरुक्तिः ॥ ७३ ॥
अन्यार्थाभिप्रायो निषेधो निषेधः ॥ ७४ ॥
तादृशं विधानं विधिः ॥ ७५ ॥
कार्यस्य कुतश्चिदसम्भवाभिधानमसम्भवः ॥ ७६ ॥
इतरनिषेधफलकं वचनं परिसङ्ख्या ॥ ७७ ॥
उत्तरकारणोक्तिः कारणमाला ॥ ७८ ॥
परस्परोपकारकथनमन्योन्यम् ॥ ७९ ॥
उत्तरे एव प्रश्नोन्नयनमुत्तरम् ॥ ८० ॥
सति प्रश्नेऽसकृदपूर्वोत्तरकथनमप्युत्तरम् ॥
वस्त्वन्तरगुणनिमित्तकः स्वगुणत्यागस्तद्गुणः ॥ ८१ ॥
तादृशः स्वगुणातिशयोऽनुगुणः ॥ ८२ ॥
पुनः स्वगुणप्राप्तिस्तादृश्येव पूर्वरूपम् ॥ ८३ ॥
अवस्थाभेदेऽपि पूर्वावस्थासाम्यमन्यत्पूर्वरूपम् ॥
अन्यगुणापसङ्क्रमोऽतद्गुणः ॥ ८४ ॥
गुणसाम्याद्भेदानवभासो मीलितम् ॥ ८५ ॥
हेत्वन्तरेण भेदप्रतीतिरुन्मीलितम् ॥ ८६ ॥
विजातीयव्यक्तितादात्म्यप्रत्ययः सामान्यम् ॥ ८७ ॥

हेत्वन्तरेण तत्प्रमा विशेषकम् ॥ ८८ ॥
कारणान्तरसमवधानात्कार्यसौकर्यं समाधिः ॥ ८९ ॥
इष्टादधिकलाभः प्रहर्षणम् ॥ ९० ॥
विरुद्धप्राप्तिर्विषादनम् ॥ ९१ ॥
आधाराधेययोरेव परस्पराधिक्यमधिकम् ॥ ९२ ॥
विरोधिपक्षापकारः प्रत्यनीकम् ॥ ९३ ॥
सूक्ष्मादप्याधारादाधेयस्य सूक्ष्मत्वकथनमल्पम् ॥ ९४ ॥
पूर्वपूर्वविशेषणानामुत्तरोत्तरं विशेष्यत्वोक्तिरेकावली ९५॥
चमत्कारिस्मृतिः स्मरणम् ॥ ९६ ॥
रम्यभ्रमो भ्रान्तिमान् ॥ ९७ ॥
उपमानतिरस्कारः प्रतीपम् ॥ ९८ ॥
आधारं विनापि वृत्तिर्विशेषः ॥ ९९ ॥
एकस्य युगपदनेकत्र वृत्तिरपरो विशेषः ॥
एककार्य्येणानेककार्य्यसिद्धिरन्यो विशेषः ॥
उत्तरोत्तरोत्कर्षः सारः ॥ १०० ॥
कार्यकारणयोर्भिन्नदेशत्वमसङ्गतिः ॥ १०१ ॥
अन्यत्र चिकीर्षितस्यान्यत्र करणमपराऽसङ्गतिः ॥
कार्यान्तरप्रवृत्तस्य तद्विरुद्धकार्यकरणमन्यासङ्गतिः ॥
दोषगुणयोर्गुणदोषत्वकल्पनं लेशः ॥ १०२ ॥
अन्यगुणदोषाभ्यामन्यदोषगुणकथनमुल्लासः ॥ १०३ ॥
अन्यगुणदोषयोरप्रयोजकत्वकथनमवज्ञा ॥ १०४ ॥
गुणविशेषानुषङ्गाद्दोषस्य प्रार्थनमनुज्ञा ॥ १०५ ॥

सम्बन्धानुरूप्यं समः ॥ १०६ ॥

अयोग्यसम्बन्धो विषमः ॥ १०७ ॥

इष्टप्राप्त्यभावविशिष्टानिष्टप्राप्तिरपरो विषमः ॥

कार्यकारणयोर्गुणाक्रियान्यतराविरोधेऽन्यो विषमः ॥

उपादेयस्यापि कुताश्चिद्दोषात्तिरस्कारः .... ॥ १०८ ॥

कार्यान्तरेहेतोस्तद्विरुद्धकार्ये जनकत्वं व्याघातः ॥ १०९ ॥

इष्टार्थविरुद्धे प्रयत्नो विचित्रम् ॥ ११० ॥

परस्परमनपेक्षमाणानामलङ्काराणामेकवाक्यवृत्तित्वं संसृष्टिः ॥ १११ ॥

अलङ्कारस्यालङ्कारान्तरसापेक्षत्वेऽङ्गाङ्गिभावः सङ्करः ११२

साधकबाधकप्रमाणाभावादन्यतरालङ्कारनिणर्याभावे सन्देहरूपः सङ्करो द्वितियः ॥ ११३ ॥

शब्दार्थालङ्करणयोरेकपदवृत्तित्वं तृतीयः सङ्करः ॥ ११४ ॥

रसस्य पराङ्गत्वे रसवदलङ्कारः ॥ ११५ ॥

भावस्य पराङ्गत्वे प्रेयोनामालङ्कारः ॥ ११६ ॥

रसाभासभावाभासयोः पराङ्गत्वे ऊर्जस्वी ॥ ११७ ॥

भावशान्तेः पराङ्गत्वे समाहितम् ॥ ११८ ॥

भावोदयभावसन्धिभावशबलत्वानां पराङ्गत्वे तन्नामान एव त्रयोऽलङ्काराः शास्त्रकारैः संज्ञान्तरानुक्तेः ॥ ११९ ॥

इति ।

श्रीविश्वेश्वरपण्डितविरचितः

# अलङ्कारप्रदीपः ।

श्रीगणेशाय नमः ॥

ॐनमः सकलगोपवधूनां स्वात्मनि प्रवणितप्रणयाय ॥
धर्मवासरगमाऽवसरोद्यद्वारिवाहरुचिराय चिराय ॥ १ ॥
विधाय वाचस्पतये धराया लक्ष्मीधरायाभिमतं प्रणामम् ॥
विश्वेश्वरोऽर्थं(१) विशदं वितन्वन् करोत्यलङ्कारकुलप्रदीपम् ॥ २ ॥

तत्र—

चमत्कारप्रयोजकं सादृश्यवर्णनमुपमा ॥ १ ॥

सा च पूर्णा लुप्ता चेति द्विविधा । यत्रोपमानमुपमेयं सामान्यधर्म इवादिपदं चेति चतुष्टयमुपात्तं सा पूर्णा ।

यथा—

विकसितमभिरामतमं रदनद्युतिकेसरं रुचिरपत्रम् ॥
अलकश्यामलमाननमलिमलिनं नलिनमिव तस्याः ॥

धर्माभिधाने च बहवः प्रकाराः । अत्रोक्ताः षट् । विकसितमित्युपचारः(२) । पद्मे पत्रविभागात्मकमुख्याविकाशः, मुखे तूपचारादुल्लासविशेषः । अभिरामेत्यनुगामित्वम्(३) रदनद्युतिवत्केसराणि यत्रेति पद्मपक्षे, रदनद्युतय एव केसराणि यत्रेति मुखपक्षे

---

(१) अर्थम् अर्थालङ्कारम् । शब्दालङ्काराणां यमकानुप्रासादीनामन्यत्र विस्तरतो निरूपितत्वादर्थालङ्काराणामेव विशदीकरणे यत्नः ।

(२) उपचारः सादृश्यलक्षणा ।

(३) उपमानोपमेयोभयानुगतत्वम् ।

इति समासभेदः। पत्रपदस्य दलपरत्वं कस्तूर्यादिपत्रलेखापरत्वं चेति श्लेषः। कुन्तलभ्रमरयोर्बिम्बप्रतिबिम्बभावः(१)। स च वस्तुतो भिन्नयोरन्योन्यसादृश्यादभिन्नतयाध्यवसितयोः प्रयोगः। श्यामलत्वं मालिन्यं चाभिन्नतया तद्विशेष्यतयोपात्तमिति वस्तुप्रतिवस्तुभावः।(२)

इवादिपदयोगे इवार्थकवतिप्रत्यये चोपमा श्रौती, तुल्यादियोगे तुल्यार्थकवतिप्रत्यये च आर्थीति सिद्धान्तः। आर्थी यथा पूर्वश्लोके "अबलाया अलिमलिननलिनतुल्यम्" इति पाठे इति बोध्यम्।

(३)लुप्ता त्रिविधा—एकलुप्ता द्विलुप्ता त्रिलुप्ता चेति। तत्राद्या त्रिधा—धर्मलुप्ता वाचकलुप्तोपमानलुप्ता चेति। धर्मलुप्ता पञ्चधा(४)

यथा—

मध्यं यथा विहायस्तडिदिव तनुरक्षि तुल्यमब्जेन॥
अधरः सुधासधर्मा कुशेशयाक्षि! त्वमुर्वशीदेश्या॥

---

(१) अत्र उपमेयवृत्तिधर्मस्य बिम्बता उपमानवृत्तिधर्मस्य च प्रतिबिम्बतेत्यालङ्कारिकसम्प्रदायः।

(२)प्रतियोगिभेदेन एकस्यैव धर्मस्य द्विरुपादानं वस्तुप्रतिवस्तुभावः। स च शुद्धो न सम्भवति किन्तु बिम्बप्रतिबिम्बभावे विशेषणतया विशेष्यतया वा। प्रकृते च एक एव धर्मः श्यामलमलिनपदाभ्यां विशेष्यतया निर्दिष्टः। केचित् 'विमलं वदनं तस्या निष्कलङ्कमृगाङ्कति' इत्यादौ शुद्धोऽपि वस्तुप्रतिवस्तुभावः सम्भवति. वैमल्यनिष्कलङ्कत्वयोर्भेदाभावेन बिम्बप्रतिबिम्बभावाभावात् इत्याहुः।

(३) अत्र प्रयोगाभावरूपो लोपो विवक्षितो न तु सर्वथाऽभावरूपः अन्यथोपमाया एवानिष्पत्तेः। स च क्वचिच्छास्त्रकृतः क्वचिच्च कवयितुरिच्छाकृत इति बोध्यम्।

(४) वाक्य-समासगतत्वेन द्विविधा श्रौती, वाक्य-समास-तद्धितगतत्वेन त्रिविधा आर्थी इतिमिलित्वा धर्मलोपे पञ्चविधा लुप्तोपमा।

अत्र वाक्ये समासे च श्रौत्यार्थी च । तद्धिते आर्था च स्पष्टा । तद्धिते श्रौत्या धर्मलुप्ताया असम्भवात् । वाचकलुप्ता षड्विधा । यथा—

विमुक्ताश्वासूपेयान्यहह दहनीयन्ति, मलया-
निलाः श्वासायन्ते तव, नवसुधाधाममधुरे ॥
शरव्यीयत्यन्तर्मदनविशिखस्तस्य, भवतीं
रतिश्लेषं श्लिष्यन् कुसुमशरचारं चरतु सः ॥

अत्र श्वासायन्त इति कर्तरि क्यङ् । सुधाधाममधुरे इति "उपमानानि सामान्यवचनैः"(२।१।५५)इति समासभेदः । दहनीयन्ति शरव्यीयन्तीति कर्मण्यधिकरणे क्यच् । रतिश्लेषं श्लिष्यन्निति कर्मणि णमुल् । कुसुमशरचारं चरत्विति कर्तरि णमुल् । उपमानलुप्ता द्विधा । यथा—

(१)चेतःसंवननं न विद्रुम इह तव त्वं गीयसे यत्समा
(२)नेत्रासेचनकं च यस्य भवती कल्याणि तुल्या भवेत् ॥
तेन त्वत्कुचजातरूपकलशे विन्यस्यमानो मुदा
यूनस्तस्य नवप्रवालतु करः पुष्पाशुगीयत्ययम् ॥

अत्र पूर्वार्द्धे समासे वाक्ये चोपमानमप्रयुक्तम् । द्विलुप्ता पञ्चविधा । क्विप्समासयोर्द्धर्मवाचकलुप्ता यथा—"नवप्रवालतु कर"इति । अत्राचारार्थकस्य क्विप इवशब्दस्य च लोपात् । अग्रिमपद्ये च 'बिम्बाधर'इति । अत्रोत्तरपदलोपिसमासे सदृशपदलोपे (वाचक)धर्माप्रयोगयोः सत्त्वात् । पुष्पाशुगीयतीति क्यचि वाचकोपमेयलुप्ता । पुष्पाशुगमिवात्मानमाचरतीत्यर्थे उपमेयस्यात्मन इवशब्दस्य च प्रयोगाभावात् ।

---

(१) संवननं वशीकरणम् 'वशक्रिया संवननम्' इत्यमरात् ।
(२) तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात् । इत्यमरः ।

त्वद्बिम्बाधरवृत्तेः साम्यस्य निरूपको यः स्यात् ॥
यत्सादृश्यं दृश्यपि स दृश्यते नैव हरिणाक्षि ! ॥

अत्र वाक्ये समासे च धर्मोपमानलुप्ता । त्रिलुप्ता यथा—'हरिणाक्षि' इति । हरिणस्याक्षिणी इवाक्षिणी यस्या इति धर्मोपमानवाचकलुप्ता । इत्थमेकोनविंशतिभेदा लुप्ता ।

**एकस्मिन्नुपमेये बहूपमानसादृश्यं मालोपमा ।**

यथा—

रमन्ते मालायामिव कुसुममय्यां मधुकरा-
श्चमत्कारोद्रेकादिव रुचि चकोरा हिमरुचः ॥
सरस्यां सौरभ्यादिव वरतनु ! श्वेतगरुतो
भवत्यामेतस्यां मम हृदयवृत्तिव्यतिकराः ॥

**पूर्वपूर्वोपमायामुपमेयस्योत्तरोत्तरोपमायामुपमानत्वेन कथनं रशनोपमा ।**

यथा—

अधर इवोक्तिर्मधुरा तनुलक्ष्मीरुक्तिवद्विशदवर्णा ।
तनुरिव मनोहरा दृग्दागिव मृगाक्ष्याः सुदुःसहो विरहः ॥

**आरोप्यस्यारोपविषयतादात्म्यापत्त्या प्रकृतोपयोगः परिणामः ।२।**

यथा—

बालेयं सविलासं विवलितवदना विलोकयति ।
कमनीयतैकनिधिना प्रसेदुषा नेत्रनलिनेन ॥

नेत्रमिव नलिनमिति रूपकस्वीकारे नलिनस्य विशेष्यतया वीक्षणानुपयोगः । न चोपमा, नेत्रं नलिनमिवेति समासस्य दुर्लभत्वात् कमनीयेत्यादिसामान्यधर्मप्रयोगात् । "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे"(२।१।५६)इति सूत्रात् । अतो नलिनस्य

नेत्रतादात्म्यापत्त्यैव प्रकृतोपयोगः ।

**सामान्येन निरूपितस्य विशेषेण निरूपणमुदाहरणम् ॥ ३ ॥**(१)

यथा—

हेयः सन्नपि विषयः स्वरूपतोऽस्मि-
न्नादेयो भवति समीहितानुकूलः ॥
चन्द्रास्ये ! हृदयकदर्थनानिदानं
सम्भोगानुगुणतयेव विप्रलम्भः ॥

**उपमानोपमेययोर्ज्ञायमानमैक्यमनन्वयः ॥ ४ ॥**

यथा—

तत्तत्सुन्दरभावभावकधिया सन्दाननं, मन्दिरं
मन्दाक्षस्य, विलासमानभवनं, शीलैकशालायिता ॥
अन्यस्माद्विषयान्मनोनयनयोर्व्यावृत्तिमातन्वती
लोकेऽस्मिन्वरवर्णिनि ! त्वामिव मे सम्यं त्वमाभाससे ॥

**सर्वथैवोपमाननिषेधोऽसमः ।५।**

यथा—

---

(१) विशेषेण सामान्यसमर्थनरूपार्थान्तरन्यासभेदेन नास्य गतार्थता, यथेवदृष्टान्तादिशब्दघटितत्वादस्य तद्रहितत्वाच्चार्थान्तरन्यासस्य। इवशब्दघटितस्थले उपमया गतार्थत्वशङ्कापि न कार्या,लक्षणयेवादेः सामान्यविशेषात्मकवाक्यार्थयोरवयवावयविभावपरत्वेन उपमाप्रयोजकसादृश्यासमुल्लासात्। इवादिरहितस्थले आर्थेनानेनैवोपपत्तौ नार्थान्तरन्यास आश्रयणीय इति न वक्तव्यम् । द्वयोर्वैलक्षण्यस्य जागरूकत्वात् । तथाहि—यत्र विशेषवाक्यार्थेन सामान्यवाक्यार्थः समर्थ्यते तत्र द्वयी गतिर्भवति । अनुवाद्यांशे विशेषत्वं विधेयांशस्तु सामान्यगत इत्येका,उभयांशेऽपि विशेषत्वमित्यन्या । तत्र पूर्वा उदाहरणालङ्कारस्य विषयः । अन्या अर्थान्तरन्यासस्य इत्यादि रसगङ्गाधरे उदाहरणालङ्कारप्रकरणे अर्थान्तरन्यासप्रकरणे च प्रतिपादितम् ।

भवदौपम्यनिरूपकमभिदधतां बालिशा बहुशः ॥
इह सहृदयो रहस्यं व्याहरति न किञ्चिदस्तीति ॥

**परस्परसादृश्यमुपमेयोपमा ।६।**

**यथा—**

मदनमतिवेलयन्ती दिक्ष्ववदातत्वमादधती ।
त्वं चन्द्रिकेव विदिता वरवर्णिनि ! चन्द्रिका त्वमिव ॥

अनन्वये उपमानान्तरव्यवच्छेदो व्यङ्ग्यः, असमे वाच्यः, [उपमे]योपमायां तृतीयोपमानव्यवच्छेदो व्यङ्ग्य इति विशेषः ।

**प्रकृतेऽप्रकृततादात्म्यसम्भावनमुत्प्रेक्षा । ७ ।**

**सा त्रिविधा । स्वरूपहेतुफलभेदात् ।**

स्वरूपोत्प्रेक्षा यथा—

नवजपाकुसुमद्युतिपाटलो विधुमुखि ! प्रतिभाति तवाधरः ।
तरुणतातरुणा नवपल्लवो विशदतामुपनीत इव स्वयम् ॥

अत्राधरे तादात्म्येन पल्लवस्यारोपः ।

हेतूत्प्रेक्षा यथा—

अंहस्संहतियोगादिव मुक्तानां हिमे सरोजानाम् ॥
मालिनं मण्डलमिन्दोरवदातं तव मुखं सुकृतैः ॥

अत्र स्वकृतादृष्टविशेषो मुखलावण्यहेतुः तत्र तादात्म्येन कमलसुकृतस्यारोपः । एवमन्यदप्यूह्यम् ।

फलोत्प्रेक्षा यथा—

चक्षुस्त्वदीक्षणोत्सुकमाकर्णितभवदुदन्तवृन्देन ॥
तस्याः श्रोत्रेण समं मिलितुमिव तदन्तिकं याति ॥

अत्र तदन्तिकगमनफलं तत्संयोगः तत्र वृत्तान्तश्रवणेच्छाजन्यत्वस्य तादात्म्येनारोपः ८ ॥

**सादृश्यनिबन्धनः प्रकृतसंशयः सन्देहः ।८।**

यथा—

प्रसूनसमवायिभिर्मलयजस्य चारम्भकै-
र्मृणालपरमाणुभिः किमु कलाभिरिन्दोः किमु ।
व्यधायि किमु वेधसा कुसुमधन्वना ऽहो इति
प्रिये तव कलेवरं समवलोक्य सन्दिह्यते ॥

संशयोत्तरमनिर्णये ऊहो वितर्कः ।९।

यथा—

किमेतद्राजीवं रजनिषु तदुल्लासरहितं
सुधांशोर्बिम्बं किं तदपि च कलङ्कं कलयति ॥
किमादर्शः स्पर्शो भवति कठिनोऽस्येति दयिता-
मुखं साक्षात्कुर्वन्सहृदयजनोऽभ्यूहतितमाम् ॥

अत्र यदीदं कमलं स्यात्तर्हि रात्रावुल्लासवन्न स्यात् इति तर्कस्यापातात् यो रात्रावुल्लासाभावः स च मुखे नास्तीतितात्पर्यम् ।

विरुद्धयोः पाक्षिकी प्राप्तिर्विकल्पः ।१०।

यथा—

जीवनहेतोर्दयिततमस्य प्राणस्य वैष सखि ! ॥
आगमने गमने वा दिवसं समुपैत्यवधिरद्य ॥

अत्र प्रियतमस्यागमनं प्राणगमनं वेत्यन्यतरस्य पाक्षिकी प्राप्तिः ॥१० ॥

उपमेये उपमानतादात्म्यारोपो रूपकम् ।११।

तच्च द्विविधम् । सावयवनिरवयवभेदात् । तत्र सावयवं द्विधा । ( समस्तवस्तुविषयमेकदेशविवर्ति च । ) सर्वेषामारोप्यारोपविषयाणां शब्दोपात्तत्वे समस्तवस्तुविषयम् ।

यथा—

कस्तूरिकातिमिरतो मलिनीयमानौ
वामेक्षणे! भवदुरोरुहचक्रवाकौ ॥
हाराग्रहीरकसुधानिधिपद्मराग-
भानू निरीक्ष्य भवतो न मिथः पृथग्वा ॥

(१)यत्र केचिदिच्छावहाः केचिदार्थास्तदेकदेशविवर्ति। यथा-
(२)चुम्बिता सुमनसामनेहसा स्नेहसारसदृशं वनस्थली ॥
आतनोति कलकण्ठकूजितं सीत्कृतं कुवलयाक्षि! भावय ॥

अत्र वसन्ते आरोप्यो नायकः, वनस्थल्यां नायिका चेति द्वयमर्थगम्यम्। पिकरवे सीत्कृतारोपेण तदाक्षेपः।

निरवयवं यथा—

अगल्भेभ्योऽप्यन्तःकरणतलरत्नापहरणे
यतस्तेभ्यस्तेभ्यो भजति विषयेभ्यो विमुखताम् ॥
शरद्राकाजैवातृकमुखि! विना त्वां प्रियतमो
निपीतायाः सोऽयं त्वदधरसुधाया मधुरिमा ॥

अत्रैक एवारोपः।

एकस्मिन्नुपमेये बहूपमानतादात्म्यारोपो मालारूपकम्।

यथा—

पुष्पेषोर्वीरयात्राजयपटहरवोऽपूर्वशृङ्गारसूत्र-
व्याख्याभाष्यप्रपञ्चस्तरुणिमकरिणो बृंहितस्यानुबन्धः ॥
सौन्दर्यैकप्रशस्तिर्निधुवनकलहोपक्रमस्वस्तिवादः
श्रुत्योः पीयूषपूरो जयति कलकलं कामिनीकाञ्चिदाम्नः ॥

आरोपान्तरसापेक्ष आरोपः परम्परितम्।

---

(१) इच्छावहाः, ऐच्छिकाः शब्दोपात्ता इतियावत्।
(२) सुमनसामनेहसा, वसन्तेन।

( तच्च श्लिष्टाश्लिष्टशब्दनिबन्धनत्वेन द्विविधम् )

यथा—

रागोत्तरेण रजनी निधिना कलानां
सौरभ्यवैभववता परिरभ्यमाणा ॥
उत्सार्यमाणतिमिरोत्करकेशपाशा
ताराः प्रसूननिवहानिव निर्जहाति ॥

अत्र कलानिधिपदं श्लिष्टम् ।

श्लेषाभावे यथा—

अन्तर्निगूढमपि गुम्फितगूढभाव-
कोलाहलं कलहहालहलं सहेलम् ॥
सद्योऽपसारयति भीरु ! रसालचीरु-
द्भ्रद्धावधानमधुपध्वनिसिद्धमन्त्रः ॥

अत्र(कलहे) विषारोपस्तदपनायकत्वेन भ्रमरगुञ्जिते मन्त्रारोपे निमित्तम् ।

प्रसिद्धक्रमाणामेकत्रोपनिबन्धनं रत्नावली । १२ ।

यथा—

(१)लक्षमनङ्गस्य मतं कलेवरं तव सुधांशुमुखि ! ।
अब्जं पुनस्तनुभृतां ततः परार्द्धं सहृदयानाम् ॥

अत्र लक्षादिसङ्ख्यानां श्लेषेण निबन्धनम् ।

प्रकृतनिषेधविशिष्टस्तदन्यारोपोऽपह्नुतिः । १३ ।

निषेधो द्विधा शाब्द आर्थश्च ।

शाब्दे निषेधे यथा—

---

(१) लक्षं शरव्ये सङ्ख्यायामिति विश्वः । अब्जं कमलं तद्वत्सुकुमारत्वात् । पक्षे शतकोटिसङ्ख्या । परार्धं श्रेष्ठम् । पक्षे सङ्ख्यान्तरानपकृष्टसङ्ख्याविशेषः ।

सुन्दरि ! नेन्दुरयं किमु नभोऽङ्गणे तारतण्डुलजिघत्सुः ।
हरिहयहरिन्महेलाहेलापारावतः स्फुरति ॥

आर्थं यथा—

ताटङ्कमौक्तिकमिषाद्वरतनु ! नक्षत्रपङ्क्तिरियम् ॥
किमपि परिष्कुरुते तव शब्दग्रहसाधनं गगनम् ॥(१)

अत्र मिषपदेन नैतानि मौक्तिकानि किंतु श्रोत्रस्याकाशात्मकतया तदीयनक्षत्राणीति गम्यते । अत्रैव कैतवापन्हुतिरिति व्यवहारः । क्वचित्सहेतुको विषयनिषेधः ।(२)

यथा—

न वयमवयवार्थस्यान्वयादन्वयामो(३)
मतिमिह हिमधामाभेदमुद्राहमानाम् ॥(४)
विरहिनयनमीनत्रासदाने निदानं
गगनसरसि खेलन्व्यंसकोऽयं चकास्ति ॥(५)

अत्र चन्द्रे चन्द्रत्वनिषेधे आल्हादकत्वाभावो हेतुरुक्तः । क्वचिद्विषयहेतूक्तावपि विषयनिषेधः ।

यथा—

प्रकाशादाशानां तिमिरनिकुरम्बाणि तिरय—

---

(१) शब्दसाक्षात्कारहेतुभूतमाकाशं श्रोत्रेन्द्रियमितियावत । कर्णशष्कुल्यवच्छिन्ननभस एव श्रोत्रत्वात् ।

(२) यस्मिन् विषयिणि धर्मिणि यो विषयो धर्मस्तस्य निषेधः । अयमेव कुवलयानन्दे हेत्वपह्नुतित्वेनोक्तः ।

(३) अन्वयाम इति अनुदात्तेत्त्वप्रयुक्तात्मनेपदानित्यत्वश्रयणेन अय गतौ इत्यस्य, इट किट कटी इत्यत्र प्रश्लिष्टस्य ईधातोर्वाऽनुपूर्वस्य रूपमिति ध्येयम् ।

(४) हिमधामाभेदम् हिमाभिन्नं धाम यस्य स तद्भेदम् ।

(५) व्यंसको धूर्तः ।

सशङ्कं सङ्कोचं गमयति समूहं जलरुहाम् ॥
तथापि भ्रान्त्यैवं हृदि सहृदयानामुदयते
विधुर्नायं किन्तु प्रणयिनि! मुखं ते विधुरिति ॥

स्वकीयतात्पर्य्यख्यापनेन परभ्रान्तिखण्डनं भ्रान्त्यपह्नुतिः ॥ १ ॥

यथा—

दूरीकरोति कुचयोः सिचयोपराग-(१)
मासञ्जयत्यवयवेषु परागयोगम् ।(२)
किं भेजिषे विषयतां मलयानिलस्य
मुग्धे! न, किन्तु हृदयाभिमतस्य तस्य ॥

परकीयप्रमाखण्डनाय स्वतात्पर्यस्यान्यथाकरणं छेकापह्नुतिः । २ ।

यथा—

आकुलयति कुचमुकुलं चुम्बति बिम्बाधरं दृशौ स्पृशति ।
दयिततमः किमधिगतो न हि सहचरि! विभ्रमन्भ्रमरः ॥

अप्रकृतनिषेधविशिष्टप्रकृतस्थापनं निश्चयः ॥ १४ ॥

यथा—

(३)तीरे तरणिसुतायास्तमालवीथीयमुल्लसति ।
किमिति त्वरया दूरादध्वग! नावं गवेषयसि ॥

अत्र तमालमालायां भ्रान्त्या प्रसक्तं यमुनातादात्म्यं नि-

---

१ सिचयस्य वस्त्रस्य उपरागं सम्बन्धम् ।

२ परागः धूलिः सुरतश्रमशान्तिनिमित्तककर्पूरादिचूर्णं च ।

३ अत्र कालिन्दीतीरलक्षितमालमालायां कालिन्दीभ्रान्त्या नावं गवेषयन्तं पान्थं प्रति कयाचित् तद्भ्रमखण्डनेन तरणोपायो नापेक्षित इति प्रतिपाद्यते ।

षिध्य वस्तुतस्तमालमालातादात्म्यस्य स्थापनम् ॥

शब्दैक्ये सत्यनेकार्थकथनं श्लेषः ॥ १५ ॥

स च द्विधा । अभङ्गसभङ्गभेदात् ।

यथा—

(१)पूर्वा हरिदपि तमसा श्यामेयमकारि जृम्भमाणेन ।
तस्यामेव कलानिधिराधास्यति रागमुद्गच्छन् ॥

अत्रैकानुपूर्वीकपदानामेव भिन्नार्थकत्वम् । द्वितीयो भिन्नानुपूर्वीकशब्दबोध्यान्यार्थकः । स चाष्टधा । वर्ण–पद–लिङ्ग–भाषा–प्रकृति–प्रत्यय–विभक्ति–वचनभेदात् । वर्णश्लेषो यथा—

खञ्जनमञ्जुलनयने ! त्वया समासञ्जितो यदसौ ।
तेन तदीयावयवा बाधां दधतीति साधीयः ॥

अत्र असु–असिशब्दयोरसाविति सप्तम्येकवचने तुल्यम् ।

पदश्लेषो यथा—

अलकावलोकने तव (२)सारम्भा मम दृगुत्सुकिता ।
उपरुद्धा निकषाभवचेलेन वतान्तरा मिलता ॥

अत्रालकानाम् अलकाया वेत्यादिपदभेदः ।

लिङ्गभेदो यथा—

दधती मदननिकारं कमलानां मालिकामुपहसन्ती ।
यूनां मनो हरन्ती सुतनु ! त्वं च त्वदीयनेत्रे च ॥

---

(१) अत्र हरित् दिक् हरितवर्णो च, श्यामा नायिका कृष्णरूपा च, कलानिधिश्चन्द्रो विदग्धश्च, रागं रक्तवर्णत्वं अनुरागं च इति एकानुपूर्वीमद्भिः पदैर्भिन्नार्थप्रतिपादनादभङ्गश्लेषः । (२) सारम्भा कृतोपक्रमा सा रम्भा स्वर्वेश्या, अममदृक् ममत्वशून्यदृष्टिः, निकषाभवं समीपस्थं चेलं वस्त्रं तेन प० निकषाभवो राक्षसः चेलः कुत्सितार्थः रावणेनेत्यर्थः । उत्तरकाण्डगेयं कथा ।

भाषाश्लेषो यथा—

साहसकी सरसं तं मोहं मा गच्छ भण सुमासवहम्।
इत्याहत्यभिदधतीं दयिततमो मानिनीमनुनिनीषन्॥

अत्र तं पूर्वकालीनं मद्विषयकं (रसं) मोघं व्यर्थं कस्मात्कथयसि, मा आगच्छ आगमन(प्रयोजन)स्य मत्परिरम्भादेर्दुर्लभत्वात्, भण मां शपथमिति नायिकावाक्यार्थः। साहसकी साहसयुक्ता, सरसं साभिनिवेशं, मोहं मदपराधभ्रमं मा गच्छ माप्नुहि सुमानां पुष्पाणाम् आसः क्षेपः तद्वहं तद्वत्सुकुमारं यथा स्यात्तथा भण न तु निष्ठुरमिति नायकवाक्यार्थः।

प्रकृत्यादिचतुष्टयश्लेषो यथा—

(१)माकन्दः कुसुमं प्रधास्यति मधुप्रस्यन्दमिन्दिन्दिरः
श्रोतारः पिककूजितानि परमामार्तिं गमिष्यन्ति च॥
प्रत्यक्षं मलयानिलस्य सुरभिस्पर्शौ समायास्यतः
सञ्चिन्त्येति मनो वियुक्तसुतनोः सख्यश्च गाते श्रमम्॥

**प्रकृतवृत्तान्तेनाप्रकृतप्रतीतिः समासोक्तिः॥ १६॥**

यथा—

ऊर्ध्वीकृत्य ग्रीवां चकोरि! किं वा दिदृक्षसे चन्द्रम्।
अयथास्थानस्थापितपञ्जररुद्धं न वेत्सि खम्॥

अत्र प्रकृतचकोरीव्यवहारेण क्वचिदनुरक्तायाः पराधीन-

---

१ प्रधास्यति इति धाञो धेटश्च रूपम्। अत्र प्रकृतिश्लेषः। श्रोतारः इति श्रुधातोर्लुटि, तृनि च बहुवचने रूपम्। तृन्पक्षे 'नलोकाव्ययनिष्ठाखलर्थतृनाम् (२।३।६९) इति षष्ठीनिषेधः। अत्र प्रत्ययश्लेषः। समायास्यतः इति षष्ठ्यन्तं मलयानिलस्य इत्यस्य विशेषणं, क्रियापदं वा। अत्र च विभक्तिश्लेषः। गाते इति गाङ् गतौ इत्यस्य एकवचने बहुवचने च तुल्यं रूपम्। अत्र वचनश्लेषः। श्रमं, खेदम्।

नायिकायाः प्रतीतिः । अत्र प्रकृतेऽप्रकृतनायिकादिव्यवहार एवारोप्यत इति सर्वस्वकारादयः । नायिकात्वादिकमप्यारोप्यत इति रसगङ्गाधरादयः ॥

अन्वयानुपपत्त्या सादृश्यपर्यवसानं निदर्शना । १७ ।

यथा—

वदनमधि विधुविधुन्तुदमृधमाधुर्यं दधाति बाष्पाम्बु ।
कज्जलमलिनितमक्ष्णोरम्बुजरोलम्बसम्बलनम् ॥

अन्यदीयधर्मस्यान्येन धारणानुपपत्त्या सादृश्यसिद्धिः ॥

क्रियया हेतुहेतुमद्भावप्रतीतिर्द्वितीया निदर्शना ।

यथा—

मुधैव विरुणद्धि योऽधिकगुणेन सार्द्धं, स त-
न्निरूपितपराभवं भजति भावये भामिनि ! ॥
भवद्वदनभव्यतां समभिमन्यमानो विधुः
कपोलफलके तव प्रतिफलन् पराभूयते ॥

अत्र स्वोत्कृष्टविरोधः पराभवहेतुरिति सामान्यकार्यकारणभावः पूर्वार्द्धप्रतिपाद्यः । तत्रोत्तरार्द्धं दृष्टान्तः । तत्र वदनं गुणाधिकविशेषः चन्द्रोऽपकृष्टविशेषः । कार्यमुभयत्र पराभव एव ।

प्रकृतमनुपन्यस्य तत्स्थानीयवाक्यार्थान्तरोपन्यासो ललितम् ॥ १८ ॥

यथा—

मधुरतामवधेहि मधोरिमां मलयमारुतमाकलयावले ! ॥
किमिति नावदधासि मुधाऽबुधे ! विधिवशान्निधिमाहितसन्निधिम् ॥

अत्र स्वयमागतं नायकं किमित्युपेक्षसे इति प्रकृतमनभिधाय तत्समजातीयस्य स्वयमुपस्थितनिधिं कस्मान्नाद्रियसे इत्यस्यो-

पन्यासः ॥

अप्रकृतवृत्तान्तेन प्रकृतप्रतीतिरप्रस्तुतप्रशंसा ॥१९॥

सा च पञ्चविधा । कार्ये प्रस्तुते कारणस्योक्तिर्यथा—

धुरि मधुरिमधराणामधीयते मधु मुधैव वैधेयाः ।(१)
बिम्बाधरं वधूनामभिदधति विशुद्धधीनिधयः ॥

अत्र नायिकामात्राऽऽसक्तौ वाच्यायां तद्धेतोरधरमाधुर्यस्याभिधानम् ।

कारणे प्रस्तुते कार्यस्योक्तिर्यथा—

जृम्भायामम्भोरुहवदनाया भवदवेक्षणभवायाम् ।
पुलकोदञ्चितकञ्चुकसन्धिभिराबन्धि चटचटाशब्दः ॥

अत्र सा त्वय्यत्यन्तमनुरक्तेतिवक्तव्ये तत्कार्यमुक्तम् ।

सामान्याभिधाने विशेषाभिधानं यथा—

(२)शिञ्जानेन समञ्जसमिह मञ्जीरेण खञ्जनाक्षि ! कृतम् ।
क्षणमलिगुञ्जितविरही दुरवस्थः स्यादशोककुसुमौघः ॥

अत्र यद्व्यतिरेको यदीयविलक्षणशोभाव्यतिरेकप्रयोजकस्तद्रहितस्य तस्य जन्मानर्थकमिति सामान्ये भ्रमरगुञ्जिताभावेऽशोककुसुमानां शोभाराहित्यमापादितम् ।

विशेषे प्रस्तुते सामान्याभिधानं यथा—

कुसुमशरवश्यमनसो नूतनकुवलयदलद्रोहिनयनायाः ।
तन्वि ! विभावय दयिते नैव विरुध्यासितुं युक्तम् ॥

---

(१) मूर्खवैधेयबालिशा इत्यमरः ।

(२) अत्र दोहदाय विहिताशोकचरणताडना कांचित्केन चिदुच्यते । आकस्मिकचरणतलताडनोत्पन्नानां पुष्पाणां तदानीं भ्रमरसंयोगाभावेन तद्गुञ्जितहीनतया शोभाविशेषहानिः स्यात् । नूपुरकूजितसम्पत्त्या तु उत्पत्तिकालावच्छेदेनैव भ्रमरध्वनिसजातीयध्वनिसम्बन्धात्तत्प्रयुक्तवैजात्यहानिर्न भवतीति भावः ।

अत्र कामार्तायास्तव दयितानादरो न युक्त इति विशेषे वाच्ये ईदृश्या नायिकाया दयितानादरणं न युक्तमिति सामान्यमुक्तम् ।

तुल्ये वाच्ये तुल्याभिधानं यथा—

अस्माभिरेव विहितस्तव लवलि ! लवङ्गसंसर्गः ।
अधुना वेल्लितविटपा मुखमप्यस्मिन्निवर्तयसि ॥

अत्र नायकसङ्घटनोत्तरं दूतीमनाद्रियमाणायां नायिकायां तत्सदृशी लवली उक्ता ।

प्रस्तुतवृत्तान्तेन प्रस्तुतप्रतीतिः प्रस्तुताङ्कुरः ॥२०॥

यथा—

लोभेन त्वद्बिम्बाधररसपीयूषपानस्य ।
(१)संविहितचरणपातस्त्वं रागी यावकः श्रयति ॥

अत्र यावकप्रक्रमे चरणसम्बन्धानन्तरमधरसम्बन्धोक्त्या प्रस्तुतस्य प्रणामानन्तरसम्भोगार्थिनो नायकस्य वृत्तान्तप्रतीतिः।

प्रस्तुताप्रस्तुतयोः सर्वथैवाभेदप्रतीतिरतिशयोक्तिः २१

यथा—

विलसति परिच्छिन्नं व्योम स्तनन्धयमुष्टिना
मिहिरमिलनादव्याकोशं कुशेशयकोरकम् ।
अहनि रजनावेकाकारं सुधानिधिमण्डलं
भुवि विजयते दृश्या त्रियुग्महान्तमनेहसम् ॥

अत्र नायिकाया मध्यकुचमुखतनूनां व्योमाद्युपमानवाचकपदैरेव गौणवृत्त्याऽभिधानम् ।

तस्यैवान्यत्वाभिधानं भेदकातिशयोक्तिः ।१।

---

१ पात संयोगः प्रणामश्च । रागी रक्तवर्णः स्नेहवांश्च । यावकः अलक्तकः, यौति मिश्रीभवितुमर्हतीति च ।

यथा—

विच्छित्तिरत्यन्तविलक्षणेयमनन्यजोज्जृम्भितमन्यदेव ।(१)
अन्यानि दृग्भङ्गतरङ्गितानि तस्या विजातीयमथोक्तिजातम् ॥

असम्बन्धे सम्बन्धकल्पनं सम्बन्धातिशयोक्तिः । २।

यथा—

निशि भवदास्यसमुद्भवपरिमलमाजिघ्रदेकजातीयम् ।
पद्मस्मितमनुमिनुते कोककुलं केलिवापीषु ॥

अत्र चक्रवाकानां तादृशानुमित्यसम्बन्धेऽपि तादृश-सम्बन्ध उक्तः ।

सम्बन्धेऽप्यसम्बन्धकथनं द्वितीयाऽसम्बन्धातिशयोक्तिः ३

यथा—

तुन्दपरिमृजमिदं ते मुखरुचिपानाच्चकोरकुलम् ।
राकायामपि चन्द्रज्योत्स्नापानाय नो यतते ॥

अत्र ज्योत्स्नास्वादनयत्नसम्बन्धेऽप्यसम्बन्ध उक्तः ।

कार्यकारणयोर्यौगपद्यमक्रमातिशयोक्तिः । ४ ।

यथा—

निपतितं गजगामिनि ! मामकं
तव कलेवरवीरुधि लोचनम् ।
अपि हृदि क्षणमाप्य तदैव मे
निपतिता रतिनायकसायकाः ॥

हेतुप्रसक्तावेव कार्योत्पत्तिकथनं चपलातिशयोक्तिः॥५॥

यथा—

गेहपतावायास्यति दयिततमे च प्रवत्स्यति गृहिण्याः ।
तनुतोदयेन तत्क्षणमनर्थवीजं समर्थितमायम् ॥

(१) अनन्यजः कामः ।

अत्र प्रियप्रवाससम्भावनायामेव तत्कार्यतनुत्वस्योत्पत्तेः कथनम्।

**कारणात्प्रागेव कार्योत्पत्तिकथनमत्यन्तातिशयोक्तिः॥२१॥**

यथा—

प्रययुर्मदीयहृदयाद्गुणा विवेकादयः प्रथमम्।
सर्वस्वं मदनस्य न्यविशत् स्वान्तं ततश्चरमम्॥

**केन चिदापादकेन कस्य चिदापादनं सम्भावनम्॥२२॥**

यथा—

बाले! स्युर्यदि जातुचित्सुमनसां माला विमर्दक्षमा
बिभ्राणा यदि सौरभं सहजतः स्युर्जातरूपस्रजः॥
चैतन्यं यदि वा कदापि बिभृयुः श्रीखण्डपाञ्चालिका-
स्तर्ह्यन्येन निरूपितं तव तनुः सादृश्यमासादयेत्॥

**कस्य चिदर्थस्य मिथ्यात्वसिद्धये मिथ्याभूतार्थान्तरोपकल्पनं मिथ्याध्यवसितिः॥ २३ ॥**

यथा—

(१) गगनतललक्ष्मीकमलपरिमलकमनीयतनुर्मृगाक्षि! पुमान्॥
वन्ध्यासुतं प्रति वदेत्तवावलग्नस्य सावयवभावम्॥

**उत्कर्षानुपपादनेऽप्युत्कर्षहेतुत्वकथनं प्रौढोक्तिः॥२४॥**

यथा—

शशाङ्कसमवायिभिः शकलितैः कलङ्कोज्झितैः
(२) कृते सुमुखि! चत्वरे यदि सरोवरं रोहति॥
ततो भवति पद्मिनी यदि तया समारभ्यते

---

(१) अत्र मध्यगतसावयवत्वस्य मिथ्यात्वसिद्धये वन्ध्यासुतादिमिथ्याभूतार्थान्तरकल्पनम्।

(२) कृते निर्मिते।

प्रसूनममुना समं तव मुखं तदाचक्ष्महे ॥(१)

अत्र निमित्तकारणगुणानां कार्यगुणे तदुत्कर्षे वानुपपादकत्वेऽपि तदुपपादकत्वोक्तिः ।

कार्यकारणयोरभेदाभिधानं हेतुः । २५ ।

यथा--

आकृष्टिर्हृदयस्य विस्मयततेः सृष्टिर्दृशोर्बन्धनं
प्रोल्लासो मकरध्वजस्य जगतीवामभ्रुवां न्यक्कृतिः ।
उद्रेकः (२)प्रमदस्य विभ्रमभुवो निर्दम्भमुज्जृम्भणं
प्रत्यासत्तिरसौ रसस्य जयति त्रस्यत्कुरङ्गेक्षणा ॥

हेतुहेतुमद्भाववर्णनं द्वितीयो हेतुः । १ ।

यथा—

प्रालेयांशोः कलायामुपहतिमतये दृश्यताद्रश्यतायां
मालानां कौसुमीनामपि मृदुतरताप्रत्ययप्रत्ययाय ॥
अप्रामाण्याय वाण्यास्त्रिदिवमृगदृशां रूपवत्तापराया
विस्तारायाद्भुतानामिह भुवि भुवने भासमे भामिनि ! त्वम् ॥

एकस्यानेकसमवेताभिन्नाभिन्नप्रकारकज्ञानविषयत्ववर्णनमुल्लेखः ॥ २६ ॥

यथा--

सङ्केतकुञ्जभवने प्रतिसञ्चरन्ती—
मालोक्य सुभ्रु ! भवतीं गहनान्धकारे ।
चाम्पेयकोरकमयीं स्रगिति द्विरेफाः
सौदामिनीति कलयन्ति मुदं मयूराः ॥

---

(१) अत्र निष्कलङ्कचन्द्रखण्डानि निमित्तकारणानि तद्गता धावल्यादिगुणाः कार्यभूतकमलगतशुभ्रतादेस्तदतिशयस्य वा न हेतवस्तथापि तद्धेतुत्वकल्पनम् ।　　(२) प्रमदो हर्षः ।

अत्र ज्ञानं भ्रमरूपम् ।

प्रमारूपं यथा—

श्रोत्रेण कोकिलवधूकलकूजितेति
घ्राणेन भासुरसरोरुहसौरभेति ॥
राजीवरम्यनयने ! रसनेन ताव-
द्विज्ञायसे ननु सुधामधुराधरेति ॥

एकस्याप्येकवृत्त्यनेकप्रकारकज्ञानविषयत्ववर्णनम
पर उल्लेखः । २ ।

यथा—

(१) चित्राङ्गदा भुजयुगे तनुसन्निवेशे
पाञ्चालिका दृशि पृषत्यसि वाचि सत्या ।
रोहिण्यसि त्वमधरे विनता विनीतौ
छाया मनोभवविकारमहानिदाघे ॥

साम्याभिप्रायके वाक्यद्वये एकधर्मोपादानं प्रति-
वस्तूपमा ॥ २७ ॥

यथा—

ईर्ष्याकषायितं तव वदनमिदं मां धिनोत्येव ।
इन्दुरुदयारुणिम्ना भिन्नोऽपि मुदे चकोराणाम् ॥

अत्र धिवि प्रीणने इति धातुपाठात् धिनोतीति तिङन्तेन,
मुदा इत्यनेन च प्रीतिजनकत्वरूपैकधर्मोक्तिः ।

---

(१) श्लेषसङ्कीर्णमिदम् । चित्राङ्गदा काचिदङ्गना विचित्रकेयूरवती च.
पाञ्चालिका द्रौपदी पुत्तलिका च । अथवा पञ्चमेव पाञ्चं
अलिकं ललाटं यस्याः सा, पचि विस्तारे इत्यस्य पचाद्यजन्तस्य
स्वार्थेऽण् । पृषती हरिणी । सत्या सत्यभामा ऋता च
स्यभाविणीति यावत् । रोहिणी वसुदेवपत्नी रक्तवर्णा च ।
गरुडप्रसूः विनयवती च । छाया सूर्यप्रिया अनातपश्च ।

## दृष्टान्त–दीपकालङ्कारौ ।

तत्रैव बिम्बप्रतिबिम्बभावेन भिन्नधर्मोपादाने दृष्टान्तः ।२८।

यथा—

भुवनेषु भवन्तु मण्डभेदा नयनासेचनकं त्वमेव ।
कुसुमानि वहन्तु वीरुधोऽन्या नलिनी केलिविलासभूरलीनाम् ॥

अत्र नयनासेचनकत्वं केलिभूमित्वं चेति भिन्नधर्मोक्तिः ।

प्रकृताप्रकृतानामेकधर्मान्वयो दीपकम् ॥ २९ ॥

यथा—

(१)अतिसौरभवल्लिभिः पिकानां
नलिनीभिश्च कलाः शिलीमुखानाम् ।
महिलाभिरनाविला विलासा
बहुवेलं हि विलक्षणा ध्रियन्ते ॥

अत्र महिलाविलासाः प्रकृताः ( कोकिलानां भ्रमराणां च कला अप्रकृताः )तेषां कर्मत्वेन ध्रियन्ते इत्येकक्रियान्वय ।

एककारकस्यानेकक्रियान्वयः क्रियादीपकम् । १ ।

यथा—

त्वामात्मीयविहारसौधसविधावस्थायिरथ्यामुख—
प्रत्यासत्तिमृता पथा विधिवशादालोक्य सञ्चारिणम् ।
तत्र प्रक्षिपतीक्षणं वितनुते पाणौ कपोलस्थलीं
ध्यायत्युत्पुलकायते शिथिलतामायाति मुह्यत्यपि ॥

रूपान्तरेण पूर्वोक्तस्य कारकस्य उत्तरत्रान्वयरूपेणान्वयो मालादीपकम् ॥ २ ॥

यथा—

नलिनी केलिसरस्या तयाम्बुजं तेन मकरन्दः ।
तेन मधुपेनाङ्क विरहिण्यास्तेन लभ्यते लाभः ॥

(१) अतिसौरभः सहकारः ।

पूर्वं कर्मत्वेनान्विताया नलिन्या उत्तरत्र कर्तृत्वेनान्वयः ।

क्रियाया द्विरभिधानमावृत्तिः ( त्रिदीपकम् ) ॥३०॥

शब्दावृत्तिर्यथा--

जलदाः प्रचलाकिनां कुलानि(१)
स्तनितैरुन्मदयन्ति सान्द्रमन्द्रैः ।
इषवोऽनिमिषध्वजस्य चामी(२)
हृदयान्युन्मदयन्ति हन्त यूनाम् ॥

उन्मदानि कुर्वन्ति हर्षयन्ति चेत्यर्थभेदः ।

अर्थावृत्तिर्यथा--

पिदधति करभोरु ! पुष्करान्तं(३)
कलय कुलानि मुदा वलाहकानाम् ।
भुवमपि तिरयन्ति सातिरेकं
मलिनतमानि तमालकाननानि ॥

उभयावृत्तिर्यथा--

विकसति कदम्बकुसुमे मधुव्रता मधु धयन्त्यधुना ।
सहृदयधुर्या मधुरं धयन्ति बिम्बाधरं वधूनाम् ॥

**प्रकृतानामप्रकृतानामेव वा एकधर्मान्वयस्तुल्ययोगिता३१**

यथा--

धाराधरे गगनसीमलीमसत्व-
सम्पादके समभिवर्षति वारिजाक्षि! ।
कल्लोलिनीषु कुसुमेषु च केतकीना-
मध्यन्यहृत्सु च विभाति रजोऽभियुक्तिः ॥

---

(१) प्रचलाकिनो मयूराः ।

(२) अनिमिषध्वजः मीनध्वजः काम इत्यर्थः ।

(३) पुष्करान्तम् आकाशप्रदेशम् ।

अत्र वर्षावर्णने प्रकृतानां केतकादीनां रजोरूपैकधर्मसम्बन्धः । अप्रकृतानां यथा—

अधरकरचरणवार्त्ते तरुणि ! तवोत्पश्यतामरुणिमानम् ।
हिङ्गुललोहितकमहारजनानां हीयते महिमा ॥

**सपक्षविपक्षयोर्वृत्तिसामान्यमन्या तुल्ययोगिता ।१।**

यथा—

(१)ज्योत्स्नारसानुभूतिप्रोल्लसदङ्गाररुचिभाजः ।
हिमदीधितिना विहिताः सुतनु ! चकोराश्च चक्रवाकाश्च ॥

उपमानादुपमेयस्योत्कर्षवर्णनं व्यतिरेकः । ३२ ।

स च चतुर्विंशतिभेदः । शाब्दे साम्ये चत्वारो भेदाः । उत्कर्षापकर्षहेतूक्तौ, उत्कर्षमात्रहेतूक्तौ, अपकर्षमात्रहेतूक्तौ, उभयमात्रहेत्वनुक्तौ चेति । एवमार्थे साम्ये, आक्षिप्ते चेति द्वादश भेदाः । तेषां श्लिष्टत्वे द्वादशेति मिलित्वा चतुर्विंशतिभेदाः । तत्र शाब्दे साम्ये यथा—

त्वद्वक्त्रे रुचिरञ्जवत्पुनरवच्छिन्नाऽनवच्छिन्नता-
भिन्ना धूमलतेव भाति कवरी भूयोऽभिरामा दृशोः ।
श्रीरोष्ठस्य च पद्मरागदलवत्तत्सौकुमार्योज्झितं
किञ्चित्कालिकवक्रतां न वहति भ्रूश्चापलेखा यथा ॥

आर्थे साम्ये यथा—

दृश्यं दर्पणवत्कपोलफलकं भातः शुभं सर्वदा
मुक्ताभिः सदृशा लसन्ति दशना रन्ध्रानुबन्धत्यजः ॥
कुम्भेनापि पयोधरावुपमितावन्तः स शून्यः परं

(१) अत्र चक्रवाकाणां विरहितया ज्योत्स्नारसे वह्निबुद्धिः सन्तापजनकत्वात्, चकोराणां ज्योत्स्नारसास्वादने सत्यपि स्वाभाविकी स्फुलिङ्गास्वादनेच्छा जायत इति तात्पर्यं बोध्यम् ।

रम्भास्तम्भवदूरुयुग्ममहिमैकाश्लेषयोग्यं तु तव् ॥
आक्षिप्ते साम्ये यथा--
नाभिः सुभ्रु ! सरःसनाभिरसकौ मन्द्रा सदा जातु त-
द्रोमालिर्यमुनामसूयितवती नो वक्रतामञ्चति ।
मध्ये व्योमनिरोधि दृश्यपदवीं तज्जातु नोद्गाहते
पाणिः पल्लवमभ्यसूयति परं राजीवसंयोगभाक् ॥
एतत्क्रमेणैव द्वादश श्लिष्टभेदाः । यथा--
राजीवे इव ते पदे विसदृशी ते दृश्यभूते इमे
भूभ्यस्त्वङ्कुलयोऽतिलोहितमणिज्योतिःशलाका इव ।
तिस्रोऽमूर्वलयोऽपि वीचय इव प्रायेण ते नीचगाः
श्रीरुच्चैर्बिसवद्रुचिर्नियमतो दोष्णोचनोष्णोदये ॥(?)
कण्ठः कम्बुसमो विहाय हृदयं तस्यास्यसङ्गृह्णगो-(?)
नासेयं तिलपुष्पवद्वहति नो मालिन्यमस्याः फलम् ।
भालं चेन्दुदलोपमं भवति तदृश्यं तु पक्षान्तरे
दृक्अप्रतिमा शिलीमुखततेस्तादात्म्यमस्यां पुनः ॥
व्याहारा विहसन्ति कोकिलकलान्ध्वन्यात्मवर्णा ध्वनीन्
कौमुद्या मदहूतिस्मितं बहुलमप्यासाद्य विद्योतते ।
दृग्भङ्गी जलजस्रजा विजयिनी साकूतभावत्यजा
माधुर्ये विरुणद्धि सुन्दरि ! सुधां दृष्ट्या मपेया तनुः ॥

अभिधातुमिष्टस्यापि विशेषलाभार्थो निषेध आक्षेपः२३।
स द्विविधः । वक्ष्यमाणविषय उक्तविषयश्चेति । आद्यो यथा--

कुमुदामिन्दति माद्यति कौमुदी
वहति गन्धवहो मलयोद्भवः ।
किमथवाभिहितैः क्रियते हितैः
सहृदयैरहितग्रहिले जने ॥

अत्रैतादृशसमये मानं मुञ्चेति अभिधित्सितमेव प्रतिषिद्ध्यते । तथाचावश्यं मानस्त्याज्य इति व्यङ्ग्यम् । द्वितीयो यथा—

मनो मैवं कार्षीरतिपरुषितं मानिनि ! वृथा
दृशौ मैवं नैषीरपि कलुषतामश्रुवृषतैः ॥
करेण स्वाक्षीर्मा मुदिततिलकं गण्डफलकं
कृतं वा संवादैः सुहृदभिहितानीहितहृदाम् ॥ (१)

अत्रोक्त्वापि तत्प्रतिषेधः कृतः । (२)

(३) उपमेयेनोपमानवैयर्थ्योक्तिरन्य आक्षेपः ॥१॥

यथा—

वैफल्याकलिता बलाहककला तावत्कलापे स्थिते
केशानां सति ते मुखे कुमुदिनीकान्ते स्थैर्यं ततः ॥
व्याहारेषु पिकाङ्गनाकलकलः कोलाहलः केवलं
पानाच्चेन्मदकृत्कलेवरलता हालापि हालाहलम् ॥

अर्थान्तरतात्पर्यको निषेधोऽपर आक्षेपः ॥ २ ॥

यथा—

कृतोत्साहां किञ्चिद्विषयकाविजिज्ञापयिषया
तदीयामालिं मा गुणविधिनिषेधात्स्म जगणः ॥
भवत्साक्षात्काराधिकरणमुपक्रम्य समयं
धियां धारा तस्यां विषयमपरं नो विषहते ॥

अत्र तत्सखीत्वेन ज्ञायमानायास्तत्सखीत्वेन ज्ञानानिषेधो

---

(१) मित्रोक्तेषु अनिष्टधियामित्यर्थः ।

(२) अत्र 'यत्र वक्तुमुपक्रान्तः पूर्वार्थो निषिध्यते स वक्ष्यमाणविषयः । यत्र तु उक्त्वा तद्वचनवैयर्थ्यमुच्यते स उक्तविषय' इति द्विविधस्याक्षेपस्य स्वरूप बोध्यम् ।

(३) काव्यप्रकाशकार इममाक्षेपभेदम् उपमानाक्षेपरूपप्रतीपभेदेऽन्तरयामास ।

बाधितः सन् नाहं तत्पक्षपाततया ब्रवीमीत्यर्थे पर्यवसन्नः ।

निषेधफलको विधिराक्षेपान्तरम् ॥ ३ ॥

यथा—

ऋजुहृदयया मया तव भुञ्जन्त्या तावदपराधान् ॥
दृष्टान्तः स्वयमेव स्वहस्तितस्तत्सजातीये ॥

अत्र पूर्ववदन्यानप्यपराधानहं सहिष्ये अतो मत्प्रातिकूल्यं यथेष्टं क्रियतामिति विधिः स्पष्टः । अग्रपर्यन्तं सहनेऽप्यतः परं न सहिष्ये तस्मादपराधं मा कार्षीरिति तात्पर्य्यम् ॥

विना हेतुं कार्योत्पत्तिर्विभावना ॥ ३४ ॥

सा च द्विविधा । उक्तनिमित्ताऽनुक्तनिमित्ता च । आद्या यथा—

नो तावन्मलयानिलेन तरलायन्ते लवङ्गीलता
माकन्दे मुकुलाकुले कलकलं कुर्वन्ति नो कोकिलाः ॥
नो वा चम्पकसम्पदा वनभुवः सम्पन्नशम्पान्वया(१)
जातं प्रोषितभर्तृकाजनमनश्चैतन्यमन्यादृशम् ॥

अत्र वसन्तानाविर्भावेऽपि विरहिणीनां मनोविकार उक्तः। विरहरूपं तन्निमित्तं च प्रोषितपदेनोपात्तम् । द्वितीया यथा—

अतिरोधतिरोहिता दृशोः श्री-
रविभक्तावयवं कृशं शरीरम् ॥
अपरागपराहतौ प्रियायाः
प्रतिमातः परिपाण्डुरौ कपोलौ ॥

अत्र विरहहेत्वनुक्तिः ।

हेतुसत्वेऽपि कार्यानुक्तिर्विशेषोक्तिः ॥ ३५ ॥

यथा—

व्याहारानवहेलयत्यपि वयस्यानां वयस्याग्रहा—(२)

---

(१) शम्पा विद्युत् । शम्पा शतह्रदा ह्रादिन्यैरावत्यः क्षणप्रभाः । इत्यमरः (२) वयसि यौवने ।

मो गृह्णासि गिरः प्रियस्य कियतीर्निर्मायमायस्यतः ॥
एते चेतसि केतकीसुमनसामामोदतो मेदुरा
उन्मादं पवना अपीह न मनाक्कुर्वन्ति तन्वङ्गि ! ते ॥
अत्र प्रस्तुतहेतुसत्त्वेऽपि तदनुत्पत्तिनिर्देशः ।

क्रमेण पदार्थान्वयो यथासङ्ख्यम् ॥ ३६ ॥

यथा—

युवत्वे बालत्वेऽप्युपजिगमिषानिर्जिगमिषे
स्तने मध्ये वास्या महिमतनिमानौ निवसतः ॥
गिरि श्रोणीभागेऽपि च मधुरभारातिगुरुते
दृशोर्भङ्गे चेतस्यपि कुटिलताविभ्रमरौ ॥

सामान्यविशेषाभ्यां विशेषसामान्यसमर्थनमर्थान्तरन्यासः ॥ ३७ ॥

प्रत्येकं द्विधा। साधर्म्यवैधर्म्यभेदात्। आद्यं साधर्म्येण यथा—
ओजायते यथेन्दुर्ग्लायति तस्यास्तथा वदनम् ॥
न खलु विपक्षसमृद्धौ परितोषं यान्त्यपि विपक्षाः। (१)
तदेव वैधर्म्येण यथा—
यौवनविहितविमर्दनमपि बालत्वं (२) कुरङ्गनयनायाः।
बालेष्वेवावर्तत चिराय साधारणे दुरासम् ॥
अत्र तुरीयचरणस्य विपर्ययः—स्वासाधारणविषये चिरं स्थातुं शक्यम् इति तेन पूर्वसमाधानम् ।

---

(१) विपदापन्नेऽपि परितोषः इति पाठान्तरम्।

(२) बालत्वं शैशवं केशवृत्तिजातिश्च । यौवनप्रागभावाधिकरणतया तत्साधारणे तस्याः शरीरे स्थितमपि यौवनागमे तत्र स्थातुमसमर्थं स्वासाधारणाश्रयेषु बालेष्वेव बालत्वं स्थितम् यतः स्वपरसाधारणविषये आसितुं दुष्करं भवतीत्यर्थः ।

द्वितीयं साधर्म्येण यथा,

महतामुपसङ्ग्रहेण दोषा
अपि सम्बिभ्रति भूरिभव्यभावम् ।
कुचसीमनि मत्तकाशिनीनां
कठिनत्वं कलयन्ति कौतुकाय ॥

तदेव वैधर्म्येण यथा—

अधरं तव माधुरीनिधाने
हृदयं तस्य सदैव सानुबन्धम् ।
विषयेषु निसर्गसुन्दरेषु
प्रवणत्वं न नवीनमिन्द्रियाणाम् ॥

अत्रोत्तरार्द्धस्य विपर्यय इन्द्रियाणां विषयाभिमुख्यं स्वाभाविकमिति तेन पूर्वसमाधानम् ।

**विशेषसमर्थकस्य सामान्यस्य विशेषान्तरेण समर्थनं विकस्वरः ॥ ३८ ॥**

यथा—

जातच्छायतया कपोलभुवि ते वाच्छन्मुखस्य श्रियं
कर्णालम्बितकेतकक्रकचभाक् शीतद्युतिर्भिद्यते ।
आकाङ्क्षा किल बाधितेऽपि विषये भाति प्रयासैकभू-
र्बालस्येव सुधाकरस्य समुपादित्सा मुहुः पाणिना ॥

**आपाताद्विरोधभानं विरोधाभासः ॥ ३९ ॥**

स दशविधः । जातेः जातिगुणक्रियाद्रव्यैः, गुणस्य गुणक्रियाद्रव्यैः, क्रियायाः क्रियाद्रव्याभ्यां, द्रव्यस्य द्रव्येणेति ।

यथा—

कर्पूरं वन्हिरुष्णो मरुदपि तपनं चन्दनं क्ष्वेड इन्दुः
सा श्यामा पाण्डुरुच्छुष्यति सजलमुखं मन्मथोऽप्यमेयः ।

चेतः शून्यायते चोल्लिखति च किमपि प्रेक्ष्यसे सर्वतस्त्वं
वैदेही सापि जाता विरहकपटतो रावणेनोपरुद्धा ॥

अत्र कर्पूरं वह्निरिति जात्योर्विरोधः। मरुदुष्ण इति जातिगुणयोः। चन्दनं तपनमिति जातिक्रिययोः। इन्दुर्विषमिति जातिद्रव्ययोः। एककाले चन्द्रव्यक्तिभेदाभावेन चन्द्रत्वस्यात्र जातित्वेनाभिमतत्वात्। एवमग्रेऽपि बोध्यम्। श्यामा पाण्डुरिति गुणयोः। अश्रुजलसंयोगवन्मुखं शुष्यतीति गुणक्रिययोः। (१)त्वं सर्वत्र दृश्यस इति क्रियाद्रव्ययोः। सापि वैदेहीतिद्रव्ययोरिति विवेकः। अपिशब्दत्वे शाब्दो विरोधः तदभावे त्वार्थ इति सिद्धान्तः।

रम्यस्वभाववर्णनं स्वभावोक्तिः ॥ ४० ॥

यथा—

उद्वेल्लद्भुजवल्लरीव्यतिकरप्रोत्क्षिप्तकूर्पासक—
प्रस्रन्तावरणव्युदासविशदीभूतार्द्धवक्षोरुहम्।
दूरादायतरोमवल्लिविततस्कन्धोन्नमत्कन्धरं
किञ्चित्कोरकितेक्षणं विजयते रम्भोरु! ते जृम्भणम् ॥

स्तुतिनिन्दातात्पर्यकानिन्दास्तुत्यभिधानं व्याजस्तुतिः ॥ ४१ ॥

यथा—

प्रेयसः प्रणयभूरहमेवेत्याकलय्य वरगात्रि! न दृप्येः।
कान्तसौहृदमनन्तरमस्ति त्वाद्विपक्षयुवतीनिवहेऽपि ॥

(?)अत्र स्वस्मिन्प्रणये विषयत्वेऽपि सपत्नीजनं प्रति तत् न बध्नातीत्यतो निर्दोषासीति स्तुतिपर्यवसानम्।

---

(१) अत्र—मन्मथोऽप्यप्रमेय इति गुणद्रव्ययोः। शून्यायते च उल्लिखति च इति क्रिययोः। इत्यपेक्षितम्।

सोढा व्रणा यदधरे च पयोधरे च
दौर्बल्यमभ्युपगतं च तनूलतायाम् ।
दूति ! त्वया सुविहितं सुहृदोऽनुरूपं
सिद्धौ विधेयविषयस्य विधिः प्रमाणम् ॥

अत्र निन्दायाम् ।(१)

अन्यनिन्दया अन्यनिन्दाभिव्यक्तिर्व्याजनिन्दा ॥४२॥

यथा—

त्वं तावदाचर जनेषु वियोगभाजा—
मात्मोचितानि मलयानिल ! चापलानि ।
वाच्यः स एव तु परं भगवानगस्त्यो
यो वृद्धिसम्मुखमरुन्ध मुधैव विन्ध्यम् ॥

अत्रागस्त्यस्य निन्दया मलयानिलस्य निन्दा ।

उभयोश्चमत्कारैकधर्मान्वयः सहोक्तिः ॥४३॥

यथा—

क्षीयन्ते सह निःसहैरवयवैस्तत्पूर्वपूर्वक्षणाः
प्राणात्याहितशङ्कयापि समुपागच्छन्ति हन्तोत्तराः ।
सन्तस्तेऽपि निरन्तरायहृदितश्वासैः सहैवासते
त्वद्दत्तावधिवासरे व्यवधिना स्तोकेन युक्ते सति ॥

किञ्चिद्विना कस्यचिदप्राशस्त्यप्राशस्त्यान्यतराभिधानं विनोक्तिः ॥ ४४ ॥

यथा—

भवद्विषयतां विना सुमुखि ! ते मृषा चाक्षुषं—
विना तव वचःसुधामपि मुधा श्रवस्सम्भवः ।
त्वदीयपरिरम्भणानुभवमाधुरीमन्तरा

---

(१) पर्यवसानमिति शेषः ।

कलापिकलकाकली कलयते न कौतूहलम् ॥
तुहिनरहितेव नलिनी विकल्पजालैरनाकुलेव सती ।
हृदयदयितस्य विरहं विहाय रम्या वरारोहा ॥

(१)नित्यसम्बन्धानामसम्बन्धवचनमन्या विनोक्तिः॥१॥

यथा—

विभ्रत्याससामभावं स्फुरति हिमरुचिर्दश्यमाने त्वदास्ये
बिम्बोष्ठे स्वाद्यमाने मधुरिमविधुरा बुध्यते सा सुधापि ।
एवं तावद्भवत्या अनघमवयवे मार्दवं संविभाव्य
मन्यन्ते सौकुमार्यातिशयविरहवज्ञाति मन्दारदाम॥(२)

किञ्चिद्दत्त्वा कस्यचिदुपादानं परिवृत्तिः ॥४५॥

यथा—

प्रदाय नवयौवनं कुसुमधन्वना तावकं
मृगाङ्कमुखि ! मानसं सदृशमात्मसान्निर्मितम् ।
मदीयहृदयं त्वया समुपगृह्य मह्यं पुनः
प्रसह्य जडतातनुक्षितिरुजः प्रसादीकृताः ॥

पूर्वत्र सदृशयोर्विनिमय उत्तरत्रासदृशयोः ।

भूतभाविविशेषप्रत्यक्षं भाविकम् ॥ ४६ ॥

यथा—

त्वां पश्यन्नवतीर्णां विहारवापीविभागमगात् ।
पूर्वापरकालीनालङ्कृतिशोभां विभावयाम्येव ॥

हेतूक्तिः काव्यलिङ्गम् ॥ ४७ ॥

यथा—

दृष्ट्वा बलाहकगलद्गलवज्जलौघै-

---

(१) नित्यः सम्बन्धो येषामिति विग्रहः ।
(२) विरहवाद्विति मतुबन्तो न वत्यन्तः ।

रन्तर्हितानि सहसा सरसीरुहाणि ।
नेत्रारविन्दयुगलं पथिकाङ्गनाया
वाष्पैः पयोधरपिधानमिवातनोति ॥

अत्रोत्तरार्द्धाभिधेयं प्रति पूर्वार्द्धं हेतुरवान्तरवाक्यार्थतयोक्तः ।
स्वतन्त्रवाक्यार्थत्वेन यथा—

तत्तद्व्यक्तितया निवेदनमनैश्वर्य्यादसम्भावितं
सन्देशार्थकमेकदेशकथनं ब्रूयादियत्तामिव ।
सामान्यानुगमोऽपि पर्यवसितो यत्किञ्चिदादाय त-
त्किं प्राणप्रियविप्रयोगरुजतां लेखे लिखेयं सखि ! ॥

अत्र विरहव्यथानिवेदनानुपपत्तौ वाक्यत्रयेण हेतूपन्यासः ।

वाच्यस्यापि भङ्ग्यन्तरेणाभिधानं पर्यायोक्तम् ॥ ४८ ॥

यथा—

सन्तप्तं त्वददर्शनेन हृदयं शेते स्वतापोर्मिषु
सक्तं त्वत्परिचुम्बनैरपि कराम्भोजे कपोलद्वयम् ।
त्वद्विश्लेषविशेषशोषविवशं वक्षोजकुम्भद्वयं
विस्रस्तालकजालशैवललतामालम्बते सुभ्रुवः ॥

अत्र विरहे तत्कार्यस्यावश्याभिधेयत्वादुक्तरीत्या विरहावस्थाभिधानम् ।

व्याजेनेष्टसाधनं द्वितीयं पर्यायोक्तम् ॥ १ ॥

यथा—

पुरस्तादालीनां कृतपरिकरा मानकलहेऽ-
प्यमत्वा निर्वाहं प्रियतमपुरस्सूक्तिसुधया ।
समुद्दिश्य प्राणप्रणयितमसुखंसकमणिं
तथाऽसावत्याक्षीत्प्रणिपतति दीपोपरि यथा ॥

अत्र सम्भोगप्रतिबन्धकसखीनिस्सारणार्थं दीपनिर्वापणे-

न सम्भोगरूपेष्टसाधनम्।

आनुकूल्यपर्य्यवसायिप्रातिकूल्यमनुकूलम् ॥४९॥

यथा—

किञ्चित्तिर्य्यगवेक्षणे सहजतो नीतेऽन्यथासिद्धतां
कर्णोत्तंसकुशेशये भणिहिते मूर्ध्नी धृते सादरम्।
तात्पर्य्ये सति पर्य्यवस्यति विधौ नेत्यान्तिकानां गिरां
सा मानाद्ग्रथित स्वयंभुजलताबन्धं प्रसादोचितम् ॥

वस्तुनोऽतिशयविशेषकथनमुदात्तम् ॥ ५० ॥

यथा—

लीलापूर्वकमिन्द्रनीलनिलयादभ्रंलिहाद्विभ्रमा-
न्निर्यान्तीं जलदोदरादिव नवां सौदामिनीं कामिनीम्।
पश्यन्तीभिरदभ्रमभ्रसमये दत्तावधीनां प्रियै—
रालीभिः मुहुरामभूयत मृशायस्यन्मनोहृत्तिभिः ॥

(१)महतामङ्गत्वकथनं द्वितीयमुदात्तम् ॥ १ ॥

यथा—

(२)कालिन्दीयं सहचरि ! तमालनीलायमानतीरान्ता।
कैवर्तककन्यायां पराशरो यत्र रतिमापत् ॥

अद्भुतशौर्यादिवर्णनमत्युक्तिः ॥ ५१ ॥

यथा—

आकाशं स्मरशासितुः कलयता कामेन कायान्तरं
पक्षत्रमपप्रमूनविशिखैर्विष्वक्समाविध्यत।

---

(१) महताम् उत्कृष्टानां वर्णनीयनिष्ठाङ्गित्वप्रतियोगित्वरूपस्य अङ्गत्वस्य कथनं द्वितीयमुदात्तमित्यर्थः।

(२) सङ्केतस्थानं सूचयन्त्याः कस्याश्चित्काश्चित्प्रत्युक्तिः। यत्र तादृशसंयमवतः पराशरस्यापि मनःक्षोभोदयात्तदगम्यागमनं जातं तत्र का वार्ताऽन्येषामिति भावः।

तस्यैते पतयालवोऽप्यवयवा धाराधराणां छटा—
निःश्वासानिलरंहसा विरहिणां मन्येऽन्तराले धृताः ॥

एकहेतुत्वेऽपि हेत्वन्तरोक्तिः समुच्चयः ॥ ५२ ॥

यथा—

पूर्वं चाक्षुषमेव तद्विषयकं चेतोऽपहारक्षमं
तद्भूतेरथ चाक्षुषस्य विषयीभावस्य वा का कथा ।
वैलक्षण्यमपाङ्गभङ्गविषयं तत्रापि मन्दस्मितं
किं वाच्यं गमनक्षणे त्रिवलितग्रीवं पुनर्वीक्षणम् ॥

गुणक्रियायौगपद्यमपरः समुच्चयः ॥ १ ॥(१)

यथा—

हरिति लोहितता तडितां गुणै—
र्मलिनता च विहायसि वारिदैः ।
विशदता विपिनेषु च केतकैः
प्रवसतां हृदि चोत्सुकताऽभवत् ॥

श्रवणाभिमुखं परिप्लवत्वं
गतवानेष च तावको दृगन्तः ।
मदनोऽपि शरासनं व्यकर्ष—
द्विशिखाश्चानशिरे मनो मदीयम् ॥

व्याहरन्ति सहसा सहकारा—
नोकहेषु परपुष्टसमूहाः ।
बिभ्रते च मलिनत्वमिदानी—

(१) अत्र गुणौ च क्रिये च गुणाक्रियाः गुणश्च क्रिया च गुणक्रिये गुणक्रियाश्च गुणक्रिये च गुणक्रियाः तासां यौगपद्यम् इति विग्रहो बोध्यः। एवं च गुणयोः क्रिययोर्गुणक्रिययोश्च यौगपद्येऽपरः समुच्चय इत्यर्थः। अत्र च सङ्ख्याविशेषोऽविवक्षितः। तेन गुणानां क्रियाणां वा यौगपद्येऽपि भवति।

मध्वनीनवनिताहृदयानि ॥

एकस्यानेकत्रानेकस्यैकत्र वा क्रमेण वृत्तिः पर्याायम् ॥ ५३ ॥

आद्यो यथा—

(१)कुचयोर्द्वयेऽर्धचन्द्रस्पर्शिनि वैमुख्यमर्हमेतस्याः ।
चित्रं प्रतियुवतीनां तद्व्यतिरेकेऽपि यत्तदभूत् ॥

अत्र वैमुख्यस्य कुचवृत्तेस्तदुत्तरं सपत्नीषु वृत्तिः ।

द्वितीयो यथा—

(२)अपहाय कुटिलमीक्षणमृजुकविलोकेन सूचयसि मानम् ।
ऋजुकुटिलत्वमतन्त्रं माहात्म्यं तु विकृतिरेव ॥

अत्रैकस्यामेव नायिकायां पूर्वं कुटिलस्य पश्चात्सरलस्य दर्शनस्य वृत्तिः ।

व्याप्येन व्यापकज्ञानमनुमानम् ॥ ५४ ॥

यथा—

अन्योन्याभिमतार्थकोविदतया स्वान्तात्मनोरेकक—
व्यापारव्यभिचारहानिनियतेः प्राणेन्द्रियाणामपि ।
अन्योन्यप्रतियोगिकस्य विरहे भेदस्य संसाधिते
साधीयो युवयोर्वियोगधिषणा भ्रान्तित्वमालम्बते ॥

---

(३) सौभाग्यं सूचयन्त्याः कस्याश्चित्काञ्चित्प्रति कथनम् । अर्धचन्द्रो नखक्षतविशेषो गलहस्तश्च । वैमुख्य वृत्तत्व पराङ्मुखत्वं च । तद्व्यतिरेकेऽपि अर्धचन्द्राभावेऽपि सपत्नीनां स्वस्मिन्नायकानुरागमाशङ्क्य पराङ्मुखत्वम् ।

(४) मानं गोपयन्तीं काञ्चित्प्रति कस्यचिदुक्तिरियम् । अतन्त्रम् अविवक्षितम् । विकृतिः सार्वदिकावस्थावैपरीत्यम् । तथा चाभिमुखदर्शनान्मानो नास्तीति न वाच्यम् । सर्वदा कुटिलदर्शनशीलायाः कटाक्षमुन्मुच्य दर्शनेन मानस्यानुमानादिति भावः ।

अत्रेमौ भिन्नाविति भ्रमः भेदाभावप्रति-
दितिहेतुविशेषणसिद्ध्यर्थं चेमौ भेदाभाववन्तौ सर्वदा-
विषयज्ञानादिमत्त्वादित्यनुमितिः । द्वयोरपि
त्वादलङ्कारकत्वम् ।

चमत्कारिसाक्षात्कारः प्रत्यक्षम् ॥ ५५ ॥

यथा–

पीयूषद्युतिमणिशालभञ्जिका वा
किं प्रेयोविरहितमत्तकाशिनीति ।
सन्देहेऽभ्युदयति निश्चिकाय शोषा-
द्वारीणां स्तनकमले निपातुकानाम् ॥

अत्र वारिशोषेण तापकत्वमनुमाय ततो विरहित्वव्याप्य-
तापकत्वज्ञानरूपविशेषदर्शनसत्त्वेनेयं विरहिणीति प्रत्यक्षम् ।

अतिदेशवाक्यार्थजन्यं ज्ञानमुपमितिः ॥ ५६ ॥

यथा–

लीलावने कुसुमितेषु महीरुहेषु
तं सिन्दुवारतरुमिन्दुमुखि ! प्रतीहि ॥
स्वच्छन्दसेवितमनोभवकेलिखेद-
स्वेदाम्बुबिन्दुसदृशाः स्तवका यदीयाः ॥

अत्र स्वेदबिन्दुमुकुलवान् सिन्दुवार इत्यतिदेशवाक्यार्थज्ञा-
नादयं सिन्दुवारपदवाच्य इत्युपमितिः ।

आप्तवाक्यं शब्दः ॥ ५७ ॥

यथा–

(१)रोहिण्याः सुत उल्मुकमजनयदिति तावदाप्तवचः ।

---

(१) विरहिण्या उक्तिरियम् । बलरामपुत्र उल्मुकसंज्ञ इति पुराणे प्रसिद्धम् । तद्द्यितावेव रोहिणीप्रियाचन्द्रात्तस्योल्मुकस्य

तद्दयितादेव पुनस्तज्ज्ञनिरध्यक्षसंसिद्धा ॥

उपपाद्येनोपपादककल्पनमर्थापत्तिः ॥ ५८ ॥

यथा--

अस्मत्सख्यङ्कपालीविरहसहकृतां पीवरोत्तुङ्गनारी-

वक्षोजाश्लेषमुद्रां दधदतिविशदां वक्षसा लक्ष्यसे त्वम् ।

आश्चर्यं पर्यवस्यस्यपि नियतमसद्दम्भमम्भोरुहाक्ष्याः

सम्भोगे यत्परस्याः शठ! शपथशतैः श्राम्यसीत्यप्यसम्यक् ॥

अत्र तस्याङ्गनासम्भुक्तत्वं विनानुपपद्यमानम् एतत्सम्भोगरहितत्वे सति सम्भोगचिन्हत्वमन्याङ्गनासम्भोगमाक्षिपति ।

प्रतियोगिभिन्नायां प्रतियोगिप्रत्यक्षसामग्र्यां सत्यां प्रतियोगिनोऽप्रत्यक्षमनुपलब्धिः ॥ ५९ ॥

यथा--

परितो निपुणं निरूपयन्त्या

सहचर्या सह सुभ्रुवा निकुञ्जम् ।

अनिरीक्षणतः प्रियस्य तस्मि-

न्विरहं तस्य विभाव्य हा व्यषादि ॥

सम्भवो यथा-- ॥ ६० ॥

त्वद्वक्षोरुहयुगले विभाति शोभा

माणिक्याभरणभुवां भरेण भासाम् ।

भूभृत्त्वे सति शिखरस्य सम्प्रयोगः

पीयूषद्युतिमुखि ! सम्भवं बिभर्त्ति ॥

अदृष्टवक्तृकः प्रवाद एवैतिह्यम् ॥ ६१ ॥

---

अलातस्य उत्पत्तिस्तु अध्यक्षसंसिद्धा प्रत्यक्षेणानुभूयते चन्द्रकिरणानामङ्गारवदुष्णस्पर्शत्वानुभवादिति भावः । अङ्गारोऽलात उल्मुकमित्यमरः ।

यथा-

स्फुरदलकत्वं युक्तं रोहणवृक्षस्य रोहिणीशमुखि ! ।
वैश्रवणस्य निवासो वृद्धैरभिधीयते यदयम् ॥

साभिप्रायविशेषणत्वं परिकरः ॥ ६२ ॥

यथा-

उपानिबन्ध्यतयाधिकमन्थरा
विधुरतां दधतो विधुतावधिम् ।
निरवकाशितपैशुनशासनाः
सहृदयप्रणयाः सखि ! दुर्लभाः ॥

विशेष्यस्य साभिप्रायकत्वं परिकराङ्कुरः ॥ ६३ ॥

यथा-

कण्टकभरेण भवतीमावृणुते कुसुमसायकोऽप्येताम् ।
अधरकुचस्मितपल्लवगुलुच्छकुसुमा हि वीरुदासि ॥

अत्र कुसुमसायकेति विशेष्यसमर्पकपदं साकूतम् । कुसुमार्थिनि लतारक्षणस्यावश्यकत्वलाभात् ।

रहस्यप्रकाशप्रतिबन्धकवाक्यं व्याजोक्तिः ॥ ६४ ॥

यथा—

कुचाभोगं भृङ्गाः कमलमुकुलत्वाकलनया
दशन्त्येते दन्तच्छदमपि शुका बिम्बरभसात् ।
विना मां प्रत्यग्रं कुसुमितमिदानीमुपवनं
प्रयाता स्वीयानां फलमविनयानामनुभव ॥

(१)तादृशी क्रिया युक्तिः ॥ ६५ ॥

सा यथा—

सध्रीची दयितस्य सन्निधिमसम्बाधेन गत्वाऽध्वना
मार्गप्रस्मृतिकैतवेन रहसि स्थित्वा यथामानसम् ।
उद्यत्केतककण्टकाकुलतया माप्यव्रणेनाध्वना

(१) तादृशी, रहस्यप्रकाशप्रतिबन्धिकेत्यर्थः ।

मार्गमस्मृतिकैतवेन कुशला दूती परावर्तते ॥

ज्ञातपररहस्यप्रकाशनं पिधानम् ॥ ६६ ॥

यथा—

पाणिना स्वमधरं पिदधानं
वीक्ष्य वल्लभतमं हरिणाक्षी ।
तत्कपोलतलवर्ति गृहीत्वा
केतकीदलमवीजयदेनम् ॥

प्रतिभया ज्ञातस्यार्थस्यान्यानवगम्यप्रकारेण प्रकाशनं सूक्ष्मम् ॥ ६७ ॥

यथा—

कामुके किमपि केलिकन्दुकं
पाणिना स्पृशति भावपूर्वकम् ।
अन्तरा निजमुरोरुहद्वयं
कामिनी न्यधित मौक्तिकावलिम् ॥

स्वभावेनाध्यवसिते कन्दुके करन्यासेन सम्भोगसमयं जिज्ञासमाने यूनि चक्रवाकाध्यवसिते स्तनद्वये मुक्तावलिदानेन चक्रवाकविच्छेदाधिकरणसमयस्तथेति विदग्धयुवत्या व्यञ्जितम् ।

अन्यतात्पर्येणान्यं प्रति कथनं गुह्योक्तिः(१) ॥ ६८ ॥

यथा—

कीचकवृन्दं सहचरि ! भीमेन ज्वलनतेजसा दग्धम् ॥
येनाकारि विहाराकाङ्क्षा निभृतैव कान्तायाः ॥(२)

---

(१) गूढोक्तिरित्युचितम् । तथा च कुवलयानन्दे—गूढोक्तिरन्योद्देश्यं चेद्यदन्यं प्रति कथ्यते । इति ।

(२) कुलटायाः सखीं प्रति कस्याश्चिदुक्तिः । महता ज्वलनमयेन तेजसा वंशवनं दग्धं, येन नायिकाया अभिसरणं गुप्तमेव स्थापितमिति विवक्षितार्थः । वह्निसदृशप्रभावेन भीमसेनेन कीचककुलं नाशितं येन द्रौपद्या विहाराकाङ्क्षा विहितेति यथाश्रुतार्थः।

अत्र सख्याः सख्यन्तरं प्रति विराटपर्वकथोक्तिः । उप-नायकं प्रति सङ्केतस्थानस्य विघटितत्वादन्यत्स्थलमन्विष्यताम्-मिति व्यङ्ग्यम् ।

**गुप्तार्थस्य कविना स्फुटीकरणं विवृतोक्तिः ॥ ६९ ॥**

यथा—

आरामातिशयेक्षणप्रकरणे नीतेन साक्षात्क्रिया-
मेकामप्यतिसौरभेण तरुणोत्तंसेन तस्या भुवः ।
मूर्ध्नः सीमनि मञ्जरीं कलयता मन्दानिलावेल्लितां
चेतो मे हृतमित्युदाहृतवती साकूतमाली वधूः ॥

अत्र व्यङ्ग्योऽप्युपनायकदर्शनरूपोऽर्थः साकूतमिति विना वाच्यप्रायतां नीतः ।

**लोकप्रवादानुकारो लोकोक्तिः ॥ ७० ॥**

यथा—

आपातप्रणयातिमात्रहृतयानालोचयन्त्या पतिं
चित्तं न्यासि यया मया त्वयि शठे साहं विहेयाधुना ।
को वा पर्यनुयुज्यते वद परः किं वा त्वदावेदितै-
र्नेत्रे विध्यति यो हि तस्य पुरतोऽकिञ्चित्करं रोदनम् ॥

**अर्थान्तरगर्भा लोकोक्तिरेव छेकोक्तिः ॥ ७१ ॥**

यथा—

सहचरि ! शरत्कालीनेयं वतायतकौमुदी
हृदयानियमो रत्याः पत्या प्रसह्य न सह्यते ।
तदभिसरणं तस्यैवास्मिन्ननेहसि युज्यते
कथय कलमाः केनोप्यन्ते निहत्य मृगानिह ॥

अत्र तुर्यपादे लोकोक्तिः । मृगशब्दस्यान्वेषकव्यञ्जकतया पिशुनानादरो व्यङ्ग्यः ।

(१)श्लेषेण यथा—

अब्दोऽभ्यागमनावधिः सुतनु ! मे संयोगविश्लेषयो-
र्नैयत्याद्वचसां कुतः प्रियतम ! प्रस्ताव एतादृशाम्।
(२)स्थैर्य्यं नान्वित एव निश्चितमुरीकार्यं मृगाक्षि ! त्वया
निघ्नत्वे मदनस्य सत्यसति वा प्राणेश ! तन्न्याहतम्॥

अत्र वर्षोत्तरमागन्तव्यमिति नायकतात्पर्य्यम्। नायिकया तु अब्दपदस्य मेघार्थकत्वम् अवधिपदस्यापादानार्थकत्वं च विवक्षित्वा मेघादागत इति तदर्थं कल्पयित्वा विभागस्य संयोगपूर्वकत्वान्मेघसंयोगाभावे तव तस्मादागमनमनुपपन्नमित्युक्तम्। नायिकया स्थैर्यपदेन नायकाभिमतं द्वितीयक्षणनाशाभावरूपं च स्थैर्य्यमभिप्रेत्य मदनपारतन्त्र्ये सति विश्लेषदुःखमावश्यकम् तदभावे तु सौगतत्वापत्त्या स्थैर्य्यस्वीकरणमनुपपन्नम् तस्य क्षणभङ्गवादित्वादित्युक्तम्।

किञ्चिदंशत्यागेन यथा—

प्रतापलापमादत्त तत्सातिवासवाञ्जनः।
प्रियैवमेव वच्मि त्वां सर्वाद्यव्यञ्जनं विना॥

स्वक्रोधचिह्नं गोपयन्त्यां प्रियायां पूर्वार्द्धे नायकस्योक्तिः। (३)तदपरं रतापलापं त्वमेव करोषीत्यर्थकतया तयोक्तम्।

---

(१) इतः पूर्वं वक्रोक्तेर्लक्षणमपेक्षितं तच्च त्रुटितं भाति। तल्लक्षणं च—एकेनान्याभिप्रायेणोक्तं वाक्यं यद्यन्येनान्याभिप्रायकं कल्प्यते तदा वक्रोक्तियोगाद्वक्रोक्तिः। सा च श्लेषेण काका वा। श्लेषेऽप्यविकृतश्लेषवक्रोक्तिर्विकृतश्लेषवक्रोक्तिरिति। अत्र "अब्दोऽभ्यागमन" इत्यत्राविकृतश्लेषवक्रोक्तिः "प्रतापलापं" इत्यत्र विकृतश्लेषवक्रोक्तिर्बोध्या।

(२) पक्षे इतः कामत इत्यर्थः।

(३) तदपवं इति पाठोऽपेक्षितः। वकाररहितमिति तदर्थः।

काक्वा यथा—

परपुष्टागिरः प्रमाणनीया दयितोक्तीरवमत्य किं त्वयैवम् ।

इदमेव वचः सखि ! स्वकीयं मम सन्देशतया तथापि वाच्यम् ॥

प्रियानुनयेन मानमपरित्यजन्त्या पिकशब्देन तत्परित्य नाहं इति सखीवाक्यार्थः । स्वप्रियाया अन्यनायिकाया वचनं नादृत्य परस्यां तद्भिन्नायां मयि पुष्टा दाक्षिण्यमात्रेण प्र गिरः किं त्वया प्रमाणनीया अपि तु नैवेति नायिकातात्पर्यम् ।

नाम्नामवयवार्थान्तरकल्पनं निरुक्तिः ॥ ७३ ॥

यथा—

वृक्षावतंस ! सहकार ! वसन्तलक्ष्मी-

सर्वस्व ! दुष्प्रसह ! भामतिलङ्घ्य सौरीम् ।

यद्भासि चक्षुषि जनस्य वियोगभाज-

स्तेनातिसौरभ इति स्फुटसंज्ञकोऽसि ॥

सूर्यस्येयं सौरी सौरी चासौ भा च सौरभा तामतिक्रान्तोऽतिसौरभः ततोऽपि(प्रचण्ड इति) यावत् । इदं पदभङ्गेनोदाहरणम् । अतिशयितं सौरभं यस्येति तदर्थप्रसिद्धेः ।

अभङ्गेन यथा—

असमाः शरा रतिपतेर्वैलक्षण्याच्छरान्तरापेक्षात् ।

सङ्ख्यावैषम्यादिति पुनरनुभूत्या विसम्वादि ॥

असमाः शरा यस्येत्यसमशरः इति कामनामधेयम् । तत्रासमत्वं पञ्चसङ्ख्यत्वं पीडाविशेषानुपपादकत्वेन दूषयित्वा शरान्तरापेक्षयाधिकदुःखजनकत्वरूपमसमत्वं व्यवस्थापितम् ।

अन्यार्थाभिप्रायो निषेधो निषेधः ॥ ७४ ॥

यथा—

न बिभीहि ममोपकण्ठमेतुं

न च जिह्रीहि विभाव्य पूर्ववृत्तम् ।

दयिता तव सा भवसहं किं
भवताहं निकृतास्मि सास्मि किं वा ॥

अल्पेऽपराधे परकीयया तिरस्कृतं नायकं प्रति स्वकीयोक्तिः । तस्यां स्वभेदस्य स्वस्मिंस्तद्भेदस्य च सत्त्वात्तद्वचनमनुपयुक्तं सत् तस्यां तदपराधासहिष्णुत्वं (१)च व्यञ्जयति ।

**तादृशं विधानं विधिः ॥ ७५ ॥**

यथा—

कान्ताकुचाकलितकुङ्कुमसङ्करेण
वक्षोऽनुरञ्जितमिदं विषहे समक्षम् ।
चित्रं तथापि पिदधासि निजापराधं
किं वा विधेयमथवा मम वल्लभोऽसि ॥

अत्र वल्लभे वल्लभत्वविधानं ममानन्यगतिकत्वान्मिथ्याभूतमपि त्वदुक्तं मन्तव्यमेवेत्यत्र पर्यवसन्नम् ।

**कार्यस्य कुतश्चिदसम्भवाभिधानमसम्भवः ॥ ७६ ॥**

व्यापारा हितहेतवः सहचरीव्यूहेहिता हेलिता
यस्यार्थे न समर्थितानि वचनान्यायस्यतः प्रेयसः ।
को नामाकलयेदयं दृढतरारूढिं समारूढिवा-
न्मानः कोकिलकूजितैः कलकलाकारैर्निकारिष्यते ॥

**इतरानिषेधफलकं वचनं परिसङ्ख्या ॥ ७७ ॥**

( इतरनिषेधो वाच्यो व्यङ्ग्यश्च । वाच्यो )

यथा—

वर्षासु रजोयोगः सरित्सु निर्भाति न हरित्सु ।
सुन्दरि सचन्द्रकमिदं केकिकुलं नान्तरिक्षतलम् ॥(२)

---

(१) अत्र 'स्वस्मिंस्तत्साहिष्णुत्व' इत्यपेक्षितं चकारानुरोधात् ।
(२) रजः रेणुः आर्तवं च । चन्द्रकः मेचकः शशी च ।

व्यङ्ग्यो यथा—

अङ्गुलीष्वहृदयासरमुद्राचापलं घनमिदं प्रतिभाति ।
तीक्ष्णता करुहस्य शिखायां मत्तकाशिनि ! विभाति भवत्याः ॥

(१)उत्तरकारणोक्तिः कारणमाला ॥ ७८ ॥

यथा—

तारुण्याद्भवति मदो मदात्परेषामाभाति प्रतिपदमप्रयोजकत्वम् ।
एतस्मात्तदवमतिस्तयेतरेषां विद्वेषः सुतनु ! ततो निजापकर्षः ॥

परस्परोपकारकथनमन्योन्यम् ॥ ७९ ॥

यथा—

यौवनेन तनुर्वीरुदद्भुता यौवनं च तनुवीरुधा तव ।
भासते मधुमवाप्य माधवी रोचते मधुरुपेत्य माधवीम् ॥

उत्तरे एव प्रश्नोन्नयनमुत्तरम् ॥ ८० ॥

यथा—

आरज्यत्तपनीयगौरवपुषां प्रेयोवियोगानलो-
त्तप्तानामवलोकिनो मृगदृशामुद्योतचन्द्रद्विषाम् । (२)
दावोपद्रवशङ्कया परिहृतारण्यप्रयाणोद्यमा
व्याधाः सखि ! भाग्यजृम्भितमिदं पल्लीभुवां सुभ्रुवाम् ॥

(३)अत्र व्याधीं प्रति कस्यचिदुपनायकस्यार्थे तव पतिर्वनं गतो न वेति सख्याः प्रश्नोऽवगम्यते ।

सति प्रश्नेऽसकृदपूर्वोत्तरकथनमप्युत्तरम् ॥ १ ॥

यथा—

कश्चन्द्रो वरतनु ! तावकीनमास्यं
किं बिम्बं सुतनु ! रदच्छदं त्वदीयम् ।

---

(१) अत्र 'पूर्वं पूर्वं' इत्यपेक्षितम् । "कारणमाला प्रोक्ता पूर्वं पूर्वं यथोत्तरं हेतौ" इत्यलङ्कारमुक्तावल्यादौ तथैवोक्तेः ।

(२) 'अवलोकिन' इत्यस्य 'व्याधा' इत्यनेन सम्बन्धः ।

(३) व्याधीं व्याधस्त्रियम् ।

का वीणा प्रणयिनि ? कण्ठकन्दली ते
को मेरुः कमलमुखि ! स्तनस्तवायम् ॥

वस्त्वन्तरगुणनिमित्तकः स्वगुणत्यागस्तद्गुणः ॥८१॥

यथा–
भवनं तपनीयमयं चम्पकमयमखिलमपि कुसुमम्।
कुङ्कुममयमनुलेपनमाभाति भवत्प्रभाभारैः ॥
अत्र विजातीयवर्णानां देहप्रभासम्बन्धः।

तादृशः स्वगुणातिशयोऽनुगुणः ॥ ८२ ॥

यथा–
खञ्जननयने ! पुञ्जीभवदञ्जनमञ्जुलैरधुना।
मालिन्यमाकलयति द्वैगुण्यं गगनगामि जीमूतैः ॥
अत्राकाशवृत्तेर्मालिन्यस्य मेघयोगादुत्कर्षः।

पुनः स्वगुणप्राप्तिस्तादृश्येव पूर्वरूपम् ॥ ८३ ॥

यथा–
त्वत्पाणिपल्लवरुचा वरगात्रि ! मुक्ता-
दामापि लोहितपदं प्रतिपद्य सार्थम्।
सद्यः समागमवशात्स्मितकौमुदीनां
दीनायते न किमपि स्वगुणोदयस्य ॥
अत्र करकान्त्या प्राप्तारुण्यस्य स्मितप्रभया श्वैत्यापत्तिः।

अवस्थाभेदेऽपि पूर्वावस्थासाम्यमन्यत्पूर्वरूपम् ॥ १ ॥

यथा—
अग्निशिखावृतदेहा सदैव सा नयनमुद्रयाकलिता।
अयि याति त्वद्विरहापत्तावपि पान्थ ! पूर्वदशाम् ॥(१)
अत्र श्लेषवशादवस्थाद्वयैकरूप्यम्।

---

(१) अग्निशिखा विरहानलज्वाला, अग्निशिखं कुङ्कुमम्। अथ कुङ्कुमम्। काश्मीरजन्माग्निशिखम्। इत्यमरः।

अन्यगुणापसङ्क्रमोऽननुगुणः ॥ ८४ ॥

यथा—

मृगमदचन्दनकुङ्कुमपङ्कैरपि सङ्क्रान्तप्रभा ।

वरतनु ! तव तनुर्वीरुत्काञ्चनपाञ्चालिकैवेयम् ॥

अत्र विजातीयवर्णानुलेपनयोगेऽपि देहस्य स्वगुणवादव-स्थ्यम् ।

गुणसाम्याद्भेदानवभासो मीलितम् ॥ ८५ ॥

यथा—

भावितमपि भवदीये तापिततपनीयकमनीये ।

काश्मीरपङ्कलेपं कलेवरे नावकलयामः ॥

हेत्वन्तरेण भेदप्रतीतिरुन्मीलितम् ॥ ८६ ॥

यथा—

रदनच्छदभाभराभिभूतस्तरुणि ! व्यक्तमलक्तकद्रवोऽयम् ।

दशनद्युतिभिर्निवेदनीयः सरसं केसरसन्निवेशभाग्भिः ॥

विजातीयव्यक्तितादात्म्यप्रत्ययः सामान्यम् ॥८७॥

यथा—

चाम्पेयमालिकोरसि तव तनुभासैव लम्भिताभिभवम् ॥

मिलितापि मीलितेयं मिलिन्दमालेन्द्रनीलगुलिकाभिः ॥

(२)हेत्वन्तरेण तत्प्रमा विशेषकम् ॥ ८८ ॥

यथा—

कङ्केल्लिकिसलयोपरि पिहितं तव पाणिमरुणिम्ना ।

सरणरणकङ्कणगणोद्गुणच्छणत्करणमेव विगणयति ॥

कारणान्तरसमवधानात्कार्यसौकर्यं समाधिः ॥ ८९ ॥

यथा—

---

(१) अपसङ्क्रमः=असम्बन्धः ।

(२)तत्प्रमा=तस्य विजातीयव्यक्तितादात्म्यापन्नस्य प्रकृतस्य प्रमा ।

पयोधरविधानतां गमितयोरराळभ्रुवो
भजामि भुजवीरुधोरपनयाय यावत्स्पृहाम् ॥
कुशेशयतया धियं कलयता कुलेनालिनां
व्यधीयत तदानने किमपि तावदास्कन्दनम् ॥

इष्टादधिकलाभः प्रहर्षणम् ॥ ९० ॥

यथा—

सुतनुमनुसमाजमाजिहानामहमगमं समह दिदृक्षमाणः ।(१)
जनममुदयनोदनादशङ्कं स्वयमनया भुजपञ्जरेण बद्धः ॥

विरुद्धप्राप्तिर्विषादनम् ॥ ९१ ॥

यथा—

आयाति वल्लभतमेऽभिमुखं मृगाक्षी
यावन्निभालयति सस्मितमास्यमस्य ।
तावद्विपक्षरमणीवदनारविन्द-
दत्तां ददर्श नवयावकरागमुद्राम् ॥

आधाराधेययोरेव परस्पराधिक्यमधिकम् ॥ ९२ ॥

यथा—

कौमुद्यामुद्यतायां विशदयितुमिदं दिक्कदम्बं पदानि
न्यस्यन्त्याः केलिकुञ्जाभिमुखमभिमतासादने सादरायाः ।
अद्वैतापन्नपुष्पायुधविविधसमुल्लासपुण्यास्तरुण्याः
धारावाहिस्पृहाया मुद उदयभृतो मानमे नैव मान्ति ॥

अत्राऽऽधेयस्याधिक्यम् । (२)

---

(१) समहं सोत्सवम् ।

(२) आधारस्याधिक्ये 'अङ्के विदर्भेन्द्रपुरस्य शङ्के न सम्ममौ नैष तथा समाजः । यथा पयोराशिरगस्त्यहस्ते यथा जगद्वा जठरे मुरारेः' ॥ इति अलङ्कारकौस्तुभ उदाहृतम् ।

विरोधिपक्षापकारः प्रत्यनीकम् ॥ ९३ ॥

यथा—

अधिवासरमात्मनोऽभिभूतिं मिहिरेणोपहितामिवासहित्वा ।
विजितं जलजं प्रिये! त्वदीयाननतादात्म्यवता सुधाकरेण ॥

सूक्ष्मादप्याधारादाधेयस्य सूक्ष्मत्वकथनमल्पम् ॥९४॥

यथा—

बालाया दिनयौवनाभिसरणेऽवश्यायबिन्दूपमा
याः स्वेदोदकविप्रुषः समभवन्वक्षोजयोरन्तरे ।
ता एव प्रियदर्शनोल्लसितयोर्मध्ये तयोः सङ्कटा-
दुत्सृज्य स्वदशां विशन्ति नलिनीनालोल्लसत्सूत्रवत् ॥

अत्र स्वभावपीवरयोः स्तनयोरन्तरस्य सूक्ष्मतया तदन्तर्वर्तिस्वेदकणानां सूक्ष्मत्वे तदपेक्षयापि स्तनान्तरसूक्ष्मत्वं स्वनोल्लासवशादुक्तं तेन स्वेदकणानां सूक्ष्मतमत्वसिद्धिः ।

पूर्वपूर्वविशेषणानामुत्तरोत्तरं विशेष्यत्वोक्तिरेकावली ९५

यथा—

सम्परूढनवयौवनमङ्गं यौवनं जनितचित्तविकारम् ।
चञ्चलीकृतदृशोऽपि विकारा मानसं च गमयन्ति दृशोऽस्याः ॥

चमत्कारिस्मृतिः स्मरणम् ॥९६॥

यथा—

श्रमवारिपृषन्निषिक्तगण्डस्थलमालम्बितचूर्णकुन्तलास्यम् ।
पुरुषायितमायतेक्षणायाः श्वसितेन स्फुरिताधरं स्मरामि ॥

रम्यभ्रमो भ्रान्तिमान् ॥ ९७ ॥

यथा—

दृक्पाते स्वकुलस्य मन्दहसिते किञ्जल्कराजेर्भ्रमा-
द्भ्राम्यमाणमधुच्युतिश्रवणतो गन्धोपलब्धेरपि ।

... कथयतां ... —
... ! ... तव ... ॥

उपमानतिरस्कारः प्रतीपम् ॥ ९८ ॥

स च त्रिविधः। उपमेयेनोपमानस्यानर्थक्यं, तस्योपमेयत्वकथनम्, उपमेयत्वस्यापि प्रतिषेधश्च। क्रमेणोदाहरणानि।

वाणी चेच्छ्रवणे कृतार्थयति तद्द्राक्षारसः क्षारव-(१)
न्निर्बन्धोऽपि मुधैव गन्धफलिकां प्रत्यङ्गमस्या यदि ।(२)
वक्त्रं चेदवलोक्यते तदफलोदर्का दिदृक्षा विधो-
र्वक्षोजौ यदि तर्हि गर्हिततमा मेरोरवाप्तिस्पृहा ॥

रमणीयपदार्थसार्थपूर्णं भुवनं भावनया विभाव्य तस्याः।
वदनप्रतियोगिकोपमाया अनुरूपं शशिनं निरूपयामः ॥

विवेकवैकल्यमनेकशाखं कल्याणि ! पर्याकलनीयमेषाम्।
मुखेन पीयूषमयूखमब्जं दृशा रतिं ये तुलयन्ति तन्वा ॥

(३)आधारं विनापि प्राप्तिर्विशेषः ॥ ९९ ॥

यथा—

(४)स्नेहस्य संवरणगोचरता रसावि-

(१) अत्र तच्छब्दस्य तर्हीत्यर्थः। एवं तृतीयचरणेऽपि।

(२) गन्धफलिकां चम्पककलिकां प्रति। 'अथ चाम्पेयश्चम्पको हेमपुष्पकः। एतस्य कलिका गन्धफली स्यात्' इत्यमरः।

(३) अत्र आधारपदं प्रसिद्धाधारपरं बोध्यम्।

(४) संवरणः अजमीढपुत्रः सूर्यदुहितुस्तपत्याः पतिः यस्मात्कुरोरुत्पत्तिः। तथाच श्रीभागवते नवमस्कन्धे द्वाविंशेऽध्याये—

योऽजमीढसुतो ह्यन्य ऋक्षः संवरणस्ततः।
तपत्यां सूर्यकन्यायां कुरुक्षेत्रपतिः कुरुः ॥ इति। पक्षे संवरणं गोपनम्। रसाविर्भावः=पृथिव्याः सकाशादुत्पत्तिः शृङ्गाराद्याविर्भावश्च। अनिरुद्धविषयः=अनिरुद्धः-प्रद्युम्नतनयस्तद्गोचरः पक्षे अप्रतिरुद्धविषय.।

भावो ऽनिरुद्धविषयः सुरताभिकामा ।
अप्यन्तरेण तपतीं जनकात्मजां वा
बाणोद्भवामपि वसन्ति नवाङ्गनायाम् ॥

एकस्य युगपदनेकत्र वृत्तिरपरो विशेषः ॥ १ ॥

मानसे विरमसे न कदाचिल्लसे नयनयोरनुलग्ना ।
व्याहृतिं न विजहासि मुहूर्तं भाससे वपुषि सुभ्रु ! निषण्णा ।

एककार्य्येणानेककार्य्यसिद्धिरन्यो विशेषः ॥ २ ॥

यथा—

लावण्येन विलक्षणेन चरितैः साध्व्या असाधारणैः
कान्त्या केनचिदद्भुतेन भवतीमातन्वता वेधसा ।
नीता लोचनगोचरं भुवि सतां पुण्यायुधप्रेयसी
वैदेही विहितान्यदेहसहिता विद्युत्कृता स्थायिनी ॥

उत्तरोत्तरोत्कर्षः सारः ॥ १०० ॥

यथा—

सारं जन्तुषु मानुषं वपुरिदं तत्रेन्द्रियाणीन्द्रिय-
ग्रामेऽमी विषयास्त्वमेषु सुमुखि ! त्वय्युद्धतं यौवनम् ।
लावण्यातिशयोऽत्र तत्र मदनस्तस्मिन्विलासोदय-
स्तस्मिन्नुन्नमितभ्रुवः स्मितभृतः साकूतदृग्भङ्गयः ॥

कार्यकारणयोर्भिन्नदेशत्वमसङ्गतिः ॥ १०१ ॥

यथा—

(१)त्वं श्यामा ज्वलति त्वयं मयि शशी रम्भोपमौ तावका-

---

(१) श्यामा रात्रिः अप्रसूता वनिता च । तथा च मेदिनी—
श्यामो वटे प्रयागस्य वारिदे वृद्धदारके ।
पिके च कृष्णहरितोः पुंसि स्यात्तद्वति त्रिषु ॥

कूपे जाड्यसमन्वयो मयि घनश्रीस्त्वं दृशोरस्तु मे।
कुम्भत्वं बिभृतस्तवोरसि कुचौ मूल्पान्तरत्वं तु मे
पाणौ ते तरुणि! स्फुरत्यरुणता तापो मयीत्यद्भुतम्॥(१)

अन्यत्र चिकीर्षितस्यान्यत्र करणमपराऽसङ्गतिः॥ १॥

यथा—

(२)सहावलेहं स्पृहयन्त्ययस्ते स्मरः सपत्नीजनपेत्रमाघात्।
त्वदीक्षणस्य श्रवणाभिमुख्यामिच्छन्त्ययथस्त स्वधनुर्गुणस्य॥

कार्यान्तरप्रवृत्तस्य तद्विरुद्धकार्यकरणमन्यासङ्गतिः॥२॥

यथा—

नवीनवरवर्णिनीवदनचन्द्रमोमण्डले
विधातुमभिवाञ्छता किमपि नेत्रसंयोजनम्।
निरूपय कुतूहलं प्रियतमेन नेत्रं मुखा (३)-
द्धीयत विदूरगं करकुशेशयेन स्वयम्॥

दोषगुणयोर्गुणदोषत्वकल्पनं लेशः॥ १०२॥

यथा—

राजीवभ्रमभृति सुभ्रु! भृङ्गपुगे त्वद्वक्त्रं रुजति कृतः प्रदीपभङ्गः।
विज्ञायाक्षयमपरं यथुर्वयस्याः सम्पन्नं रह इह दोषवैभवेन॥

अत्र भ्रमराणां सखीनां च भ्रान्त्या एकान्तसम्पत्त्या प्रा-

---

मरीचे सिन्धुलवणे क्लीबं स्त्री शारिवौषधे।
अप्रसूताङ्गनायां च प्रियङ्गावपि चोच्यते॥
यमुनायां त्रियामायां कृष्णात्रिवृतिकौषधौ। इति।

(१) अरुणता सूर्यता रक्तवर्णता च 'अरुणः सूर्यभेदे स्याद्वर्णभेदेऽपि च त्रिषु' इत्यमरात्।

(२) सहावहेलं इति सहावलेशं इति वा पाठो भवेत्।

(३) नेत्रं वस्त्रम् 'स्याज्जटांशुकयोर्नेत्रम्' इत्यमरात्।

-तेर्दोषभूताया अपि गुणत्वेनाभिधानम् [illegible]
भिधानं )

यथा--

केतक्यो जनयन्ति ते दृशि रजोराजीभिरन्धं [illegible]
व्याधूता मरुता लताः किसलयैराघातमातन्वते ।
सङ्केतस्थलमप्यतिव्यवहितं तुर्यांशशेषा निशा
(१)सोऽयं ते जघनस्तनस्य गुरुणो गौरात्रि ! बोध्यो गुणः ॥

अत्र जघनस्तनगौरवस्य वस्तुतो गुणस्यापि शीघ्रगमनप्रतिकूलत्वाद्दोषत्वेनोक्तिः ।

अन्यगुणदोषाभ्यामन्यदोषगुणकथनमुल्लासः ॥१०३॥

यथा--

यत्तव स्तनसरोजगुलुच्छे सङ्गतोऽपि वरवर्णिनि ! हारः ।
भाति रागरहितः प्रतिवेलं तत्तदीयमहहाऽहृदयत्वम् ॥

श्वश्रूरश्रूद्गमनजननी यातरो जातरोषाः
प्राचुर्येण प्रतियुवतयो रन्ध्रबद्धावधानाः ।
दूरावस्थे हृदयदयिते सर्वमेतन्मृगाक्ष्याः
शीलं साक्षादनुगुणतया यामिकप्रायमासीत् ॥

अन्यगुणदोषयोरप्रयोजकत्वकथनमवज्ञा ॥ १०४ ॥

यथा--

अनया विहिते प्रियावमाने परितुष्यन्तु विपक्षसारसाक्ष्यः ।
गुणगौरवयोगयोग्यगर्वानुगुणं स्यादियतैव किं विधेयम् ॥

प्रतिसुभ्रुवामदभ्रा भवन्तु निःश्वासमातरिश्वानः ।
स्वगुणानुरूपमनया दयिततमो नमयितव्य एवायम् ॥

गुणविशेषानुषङ्गाद्दोषस्य प्रार्थनमनुज्ञा ॥ १०५ ॥

---

(१) जघनस्तनस्य इति प्राण्यङ्गत्वादेकवद्भावेन प्रयोगः ।

यथा—

मा विरम षट्पद ! दृश रक्तकन्दमिन्दुबद्माथाः ।
सरभससीत्कृतकरधुतिनयनविकाराः किमन्यथा भेट्याः ॥

(१)सम्बन्धानुरूप्यं समः ॥ १०६ ॥

यथा—

कामनीयकमनन्यसमानं बिभ्रतोर्गुणगणानगणेयान् ।
सङ्गमेन सदृशेन विधिर्वा नूनमप्रतिहतप्रतिपत्तिः ॥

अत्र सतोर्योगः ।

यथा वा—

हृदयाद्बहिर्निहितयोर्वैमुख्यभृतोर्नितान्तनिष्ठुरयोः ।
स्तनमौक्तिकदाम्नोरयमनुरूपो भवति सम्बन्धः ॥

असत्त्वमारोपितं न तु वास्तवमित्यन्यदेतत् ।

अयोग्यसम्बन्धो विषमः ॥ १०७ ॥

यथा—

केयं नितान्तसुकुमारशरीरवीरु-
त्सीरुर्घनप्रहितवारिरुहासहिष्णुः ।
झञ्झानिलाभिहतवैद्युतहोतिदीप्त-
धारासु वारिदनिशासु च कोऽभिसारः ॥

अत्र द्वाभ्यां किम्पदाभ्यां तन्नायिकायाः तादृशाभि-
सारस्य च सम्बन्धानौचित्यं द्योत्यम् ॥

(२)इष्टप्राप्त्यभावविशिष्टानिष्टप्राप्तिरपरो विषमः ॥ १ ॥

---

(१) अनुरूपसम्बन्ध इत्यर्थः । परस्परसम्बन्धानुरूपयोः सम्ब-
न्ध इति यावत् । स च सम्बन्धः सतोरसतोश्चेति द्विविधः समा-
लङ्कारः ।

(२) अत्र इष्टप्राप्त्यभावानिष्टप्राप्त्योर्मिलितयोः प्रत्येकमपि

इष्टमाप्त्यभावमात्रं यथा—

बाले ! विलासालयजा

मृणालपुञ्जा दशतो मरालकस्य त्वम्॥

अनिष्टमाप्तिमात्रं यथा—

श्रवणकोकनदं स्पृहयन्नयं तव कपोलतले निपतन्नलिः ।

न चलितुं बत पिण्डितकुङ्कुमद्रवनिबद्धपदः पदमप्यलम् ॥

उभयं यथा—

विभ्रष्टं भूमिभागेऽभिसरणरभसादायताक्ष्याः सरस्या-

स्तीरे मञ्जीरमारादरुणमणिमयं भासमानं प्रभाभिः ।

चुम्बन्तश्चक्रवाका दिवसकरसमारम्भकालीनभास्व (१)-

द्बिम्बभ्रान्त्या भजन्ते रुजमतिरभसाद्भावयन्तोऽभिघातम्

कार्यकारणयोर्गुणक्रियान्यतरविरोधेऽन्यो विषमः ॥ २

यथा—

तामरमकुसुमकिसलयचन्द्रमसां हिततमास्तवावयवाः ।

तेषु त्वं समवेता शिशिरे शिशिरेतरस्पर्शा ॥

वरवर्णिनि ! बाहुवल्लरीयं भवदीया भवतीह कण्टकारिः ।

जनितं परिरम्भणं तया मे मदनाजिह्मगकण्टकं हिनस्ति ॥

उपादेयस्यापि कृतश्चिद्दोषात्तिरस्कारः · · · · · ॥१०८॥

यथा—

प्रियान्यव्यावृत्तिः परिजनभयं स्वस्य विश्रुता

गुणा आसन्नेऽमी सखि ! यदपि माने बहुविधाः ।

---

विषमत्वं बोध्यम् । अलङ्कारकौस्तुभादौ तथैव प्रतिपादनात् । इहाप्युदाहरणानां तेनैव क्रमेण दत्तत्वात् ।

(१) दिवसेति—दिवसकरस्य समारम्भकालीनं=उदयकालिकं भास्वत्=दीप्तिमत् यत् बिम्बं तस्य भ्रान्त्या ।

मानोऽपि प्रारब्धप्रणयपारिपाटीषु विषया-

न्तराणां सञ्चारोऽनुपममपकर्षं जनयति ॥

अत्र स्वोत्कर्षोपपादकस्यापि मानस्य प्रणयव्यवधायकत्वा-
दनादरणीयत्वम् ।

**कार्यान्तरहेतोस्तद्विरुद्धकार्ये जनकत्वं व्याघातः ॥१०९॥**

यथा—

प्रेयोमनीषितनिराकरणप्रयत्नो बिम्बाधरस्फुरणमीक्षणवक्रभावः ।
अन्यत्र रागविहतेरनुमापकानि तानि त्वयि प्रणयितामनुमापयन्ति॥

अत्र रागाभावानुमापकत्वेन प्रसिद्धानां रागानुमापकत्वम् ।

**इष्टार्थविरुद्धे प्रयत्नो विचित्रम् ॥ ११० ॥**

यथा—

विरोधिनीनां वरवर्णिनीनामपेक्षया स्वातिशयं विधातुम् ।

चित्रं कुरङ्गाक्षि ! गणं गुणानामनारतं स्वापचयं तनोषि ॥

अत्र स्वोत्कृष्टिमिच्छन्त्या गुणस्य स्वस्यापचयकरणं गुणा-
पचयस्य स्वापकर्षहेतुत्वात् अविच्छेदेन स्वापचयो वृद्धिर्यस्ये-
त्यविरोधः ।

**परस्परमनपेक्षमाणानामलङ्काराणामेकवाक्यवृत्ति-
त्वं संसृष्टिः ॥ १११ ॥**

यथा—

इयमिन्दुमुखी गुणं विपक्षप्रतिलोमं दधती तिलोत्तमायाः ।

स्वतनुप्रभया दिगन्तगानां तिमिराणामचिराभिरासहेतुः ॥

अत्रेन्दुमुखीत्युपमा, तिलोत्तमाया गुणं दधतीति निदर्शना,
उत्तरार्द्धेऽसम्बन्धे सम्बन्धरूपातिशयोक्तिः, एतेषां परस्परनिरपे-
क्षत्वात्संसृष्टिः ।

इष्टप्राप्त्यभावमात्रं यथा—

बाले ! विलासालसपजालरन्ध्रकृतमैत्र[illegible]

मृणालबुद्धया दशतो मरालकुलस्य [illegible] [illegible]।

अनिष्टप्राप्तिमात्रं यथा—

श्रवणकोकनदं स्पृहयन्नयं तव कपोलतले निपतन्नलिः।
न चलितुं बत पिण्डितकुङ्कुमद्रवनिबद्धपदः पदमप्यलम् ॥

उभयं यथा—

विभ्रष्टं भूमिभागेऽभिसरणरभसादायताक्ष्याः सरस्या-
स्तीरे मञ्जीरमारादरुणमणिमयं भासमानं प्रभाभिः।
चुम्बन्तश्चक्रवाका दिवसकरसमारम्भकालीनभास्व (१)-
द्बिम्बभ्रान्त्या भजन्ते रुजमतिरभसाद्रावयन्तोऽभिघातम् ॥

कार्यकारणयोर्गुणक्रियान्यतरविरोधेऽन्यो विषमः ॥ २ ॥

यथा—

तामरसकुसुमकिसलयचन्द्रमसां हिततमास्तवावयवाः।
तेषु त्वं समवेता शिशिरे शिशिरेतरस्पर्शा ॥

वरवर्णिनि ! बाहुवल्लरीयं भवदीया भवतीह कण्टकारिः।
जनितं परिरम्भणं तया मे मदनाजिह्मगकण्टकं हिनस्ति ॥

उपादेयस्यापि कुतश्चिद्दोषात्तिरस्कारः · · · · · ॥१०८॥

यथा—

प्रियान्यन्यासक्तिः परिजनभयं स्वस्य विश्रुता
गुणा भासन्तेऽमी सखि ! यदपि माने बहुविधाः।

---

विषमत्वं बोध्यम्। अलङ्कारकौस्तुभादौ तथैव प्रतिपादनात्। इष्टाप्यु-
दाहरणानां तेनैव क्रमेण दत्तत्वात्।

(१) दिवसेति–दिवसकरस्य समारम्भकालीनं=उदयकालिकं भास्वत्=दीप्तिमत् यत् बिम्बं तस्य भ्रान्त्या।

तत्रापि प्रारब्धप्रणयपरिपाटीषु विषया-

न्तराणां सञ्चारोऽनुपममपकर्षं ध्वनयति ॥

अत्र स्वोत्कर्षोपपादकस्यापि मानस्य प्रणयव्यवधायकत्वा-
नादरणीयत्वम् ।

कार्यान्तरहेतोस्तद्विरुद्धकार्ये जनकत्वं व्याघातः ॥१०९॥

यथा—

प्रेयोपनीपितनिराकरणप्रयत्नो बिम्बाधरस्फुरणमीक्षणवक्रभावः ।

अन्यत्र रागविहतेरनुमापकानि तानि त्वयि प्रणयितामनुमापयन्ति ॥

अत्र रागाभावानुमापकत्वेन प्रसिद्धानां रागानुपापकत्वम् ।

इष्टार्थविरुद्धे प्रयत्नो विचित्रम् ॥ ११० ॥

यथा—

विरोधिनीनां वरवर्णिनीनामपेक्षया स्वातिशयं विधातुम् ।

चित्रं कुरङ्गाक्षि ! गणं गुणानामनारतं स्वापचयं तनोषि ॥

अत्र स्वोत्कृष्टिमिच्छन्त्या गुणस्य स्वस्यापचयकरणं गुणा-
पचयस्य स्वापकर्षहेतुत्वात अविच्छेदेन स्वापचयो वृद्धिर्यस्ये-
त्यविरोधः ।

परस्परमनपेक्षमाणानामलङ्काराणामेकवाक्यवृत्ति-
त्वं संसृष्टिः ॥ १११ ॥

यथा—

इयमिन्दुमुखी गुणं विपक्षप्रतिलोमं दधती तिलोत्तमायाः ।

स्वतनुप्रभया दिगन्तगानां तिमिराणामचिरान्निरासहेतुः ॥

अत्रेन्दुमुखीत्युपमा, तिलोत्तमाया गुणं दधतीति निदर्शना,
उत्तरार्द्धेऽसम्बन्धे सम्बन्धरूपातिशयोक्तिः, एतेषां परस्परनिरपे-
क्षत्वात्संसृष्टिः ।

**अलङ्कारस्यालङ्कारान्तरसापेक्षत्वेऽङ्गाङ्गिभावः सङ्करः [illegible]**

यथा—

केशकलापः प्रकरं समुद्गिरन् कुन्दमुकुलानाम् ।
प्रियपरिरम्भानन्दाच्छ्रिततरां बाष्पविप्रुष इवोज्झति ॥

अत्र तृतीयचरणोक्तकाव्यलिङ्गमुपजीव्य कुन्दमुकुलेषु बाष्पवर्षबिन्दूत्प्रेक्षासिद्धिः ।

**साधकबाधकप्रमाणाभावादन्यतरालङ्कारनिर्णयाभावे सन्देहरूपः सङ्करो द्वितीयः ॥ ११३ ॥**

यथा—

भ्राम्यन्तीभिरनन्तरं मधुकरश्रेणीभिरम्भोरुहं
रम्भोरुप्रणयात्प्रियेण(सहसा) हस्तेन संमार्ज्यते ।
तत्सम्बन्धभृतां परस्परविभागाय प्रयासस्पृशां
पत्राणामवलोकनेन विगतप्राया निशा ज्ञायताम् ॥

अत्र किं मानत्यागो विधीयतामित्यर्थस्य रात्रिर्गतेतिभङ्ग्यन्तरेणाभिधानात्पर्यायोक्तम्, किंवा मधुकराम्भोरुहपदाभ्यामलकमुखप्रतीतेरतिशयोक्तिः, किं वाऽप्रस्तुतेन कमलमार्जनेन प्रस्तुतस्य मुखमार्जनस्यावगमात्प्रस्तुताङ्कुर इति सन्देहः ।

**शब्दार्थालङ्करणयोरेकपदवृत्तित्वं तृतीयः सङ्करः॥११**

यथा—

सविलासमावलितलोलतारका नवयौवनोदयविकारघूर्णिताः ।
हृदयं न कस्य मदयन्ति भङ्गयो घनसारसारसदृशां दृशां तव ॥

अत्र तुर्यचरणे उपमानुप्रासौ । वर्णसाम्यमनुप्रासः ।

**रसस्य पराङ्गत्वे रसवदलङ्कारः ॥ ११५ ॥**

यथा—

प्रत्येकावयवसमूहसन्निवेशे माधुर्ये वयसि विभूषणे विलासे।
ग्रामायामपि तव तन्वि ! यन्निदानं जानीमस्तदितरदन्यजन्यहेतोः(१)

अत्राद्भुतरसः शृङ्गारस्याङ्गम्।

**भावस्य पराङ्गत्वे प्रेयोनामालङ्कारः॥ ११६॥**

यथा—

उन्नीताः प्रगुणा गुणाश्चरणयोः सङ्गीकृतो वल्लभो
विध्वस्तश्च विपक्षयाँवतमदः सौभाग्यमुज्जृम्भितम्।
आस्मिन्याति कुहूरुता कुहूरुतैः काले सकोलाहल
निर्बन्धादनिबन्धनाद्विरम तद्दीर्घानुबन्धादितः॥

अत्र सखीनिष्ठनायिकाविषयकभावः शृङ्गारस्याङ्गम्।

**रसाभासभावाभासयोः पराङ्गत्वे ऊर्जस्वी॥ ११७॥**

यथा—

भजत्याविर्भावं मलिनिमनि सीमासु हरितां
गुलुच्छावस्थानं कुवलयकलापे कलयति।
मनः केलीकुञ्जे नयनमिदमीयेऽध्वनि तनु-
र्गृहाचारे सज्जत्यभिसृतिपटूनां विधुमुखि !॥

अत्राभिसारिकानिष्ठरसाभासो नायकनिष्ठशृङ्गारस्य।

दूति ! त्वं कृतिनी मम प्रियतमप्रेक्षोत्सवानन्दभू-
र्विश्रम्भादित आशु भास्वति तपत्यास्वादयन्त्यातपम्।
स्वेदस्य व्यजनानिलैरवयवालस्यस्य संवाहनैः
साकूतं करपल्लवेन रजसां कुर्यां तवापाक्रियाम्॥

अत्र नायकं सम्मुखमुपागतायां वैरिण्यां दूत्यां नायिकारति-

(१) अन्यजन्यहेतोः=अन्यं अवयवसन्निवेशादेर्भिन्नं यत् जन्यं कार्यं तस्य यो हेतुः कारणं तस्मात्, इतरत्=भिन्नम् अलौकिकमितियावत्।

भावाभासरूपा नायिकानिष्ठनायकविषयशृङ्गारस्य ।

भावशान्तेः पराङ्गत्वं समाहितम् ॥ ११८ ॥

यथा—

स्मारंस्मारमतिक्रमान् प्रणयिनः कृत्वाऽञ्जलिभिः सम्मतिं

यो मध्येहृदयं कुशेशयदृशां संवासितो वासरम् ।

विश्लेषाकुलचक्रवाततरुणीकूजासमाकर्णनैः

(१)सायं कुण्डलनेव तस्य विहिता मानस्य हारच्छलात् ॥

अत्र क्रोधशान्तिः शृङ्गारस्य ।

भावोदयभावसन्धिभावशबलत्वानां पराङ्गत्वे तन्नामान एव अर्थाऽलङ्काराः शास्त्रकारैः संज्ञान्तरानुक्तः ११९॥

यथा—

प्रियश्रोत्रोपान्तात्किशलयमशोकस्य कुतुक-

ग्रहाद्यज्जग्राह प्रथममनुरागाङ्कुरमिव ।

तदेव प्रोन्मीलन्नवरदपदं गण्डफलकं

विलोक्य व्यत्याक्षीन्मदनदहनाजिह्मगमिव ॥(२)

अत्र क्रोधोदयः पराङ्गम् ।

(३)इच्छन्त्या हृदयप्रियं प्रियसखीसम्प्रेरणात्संस्थितिं—

मन्दाक्षातिशयात्ततो विमुखतामासादयन्त्या पुनः ॥

उत्कम्पो हृदि चम्पकीयमुकुलोत्तंसः प्रतिच्छायया

भात्यात्मेव चिरादनिर्णयवशाद्दोलायमानो मुहुः ॥

औत्सुक्यलज्जयोः सन्धिः पराङ्गम् ।

---

(१) कुण्डलना=वैयर्थ्यसूचिका रेखावेष्टना ।

(२) मदनदहनेति शिवसम्बोधनम् । अजिह्मगः सर्प इत्यर्थः ।

(३) अत्र हृदयप्रियमिति प्रतिशब्दाध्याहारेणोपपादनीयम् । हृदयप्रियं प्रति सखी—इति पाठो वा बोध्यः ।

लोचनं त्रिजगद्विलक्षणमिदं चेतस्त्वमेधि स्थिरं
संवादि स्पृहया विधेर्विलसितं दौर्जन्यमन्याहत्यम् ।
स्यामस्या(१)नयनत्रिभागविषयो नन्वेतदेवाधिकं
दुर्बोधाः परयुद्ध्यो भगवते पुष्पायुधायोक्तमः ॥

अत्र विस्मयमतिहर्षशङ्कौत्सुक्यधृतिदैन्यासूयानां
शबलत्वं गौरीविषयकशिवनिष्ठशृङ्गारस्याङ्गमिति शिवम् ।
पुरातनानप्यधुनातनांश्च महानिबन्धानवधार्य सम्यक् ।
अयं कृतोऽलङ्करणप्रदीपो विद्वत्समानैर्बहुमाननीयः ॥

श्रीमन्महीमाहितत्पदसीमधीप-
न्मूर्द्धन्यताकलनसङ्गतधन्यताकः ।
लक्ष्मीधरो यमुदसूत मुदं प्रसूतां
विश्वेश्वरस्य कृतिरस्य चिरस्य लोके ॥

इति पण्डितवरविश्वेश्वरकृतोऽलङ्कारप्रदीपः समाप्तः ॥

---

(१) अस्या नयनत्रिभागविषयः स्याम् इत्यन्वयः । पार्वत्याः कटाक्षगोचरो भवेयम् इत्यर्थः ।

# देशिकालङ्कार समुच्चयः



रचयिता—

उपाध्याय भट्ट रामकृष्ण शास्त्री

( मणिचन्द्र )

मथुरावास्तव्य - पण्डितराज भट्ट - श्रीगोविन्दोपाध्याय - तनुज
षड्भ्रातृ - भट्ट - रामकृष्णोपाध्याय (मणिचन्द्र) रचितः

***

# * देशिकालङ्कार समुच्चयः *



एष ग्रन्थ उपाध्याय भट्ट ब्रजभूषण शर्म्मणा यथा सम्भव प्रकाशितः ।



卐卐

वसन्तोत्सव सं० २०२६

मूल्य १ रु० ५० पै०

ते जयन्ते रमाजानि – प्रसादैक निकेतनम् ।

गोस्वामितिलकाः श्रीमद्गोविन्दार्य्या विदां वरा ॥ रामकृ०



यद्दर्शनानि कलुषान्यति भर्जयन्ति,

येषां वचांसि विदुषो हृदि रञ्जयन्ति ।

यद्वीक्षणानि निखिलेष्ट मुपार्जयन्ति,

गोविन्द देशिक वरास्तइमे जयन्ति ॥ रामकृ०

एतेषु देशिकेन्द्रेषु रामकृष्णेन शर्म्मणा

समर्प्यते तमाञ्चासा वलङ्कृतिसमुच्चयः

श्री श्रियःकान्तो विजयतेतमाम् ।

भट्ट पण्डितराज गोविन्दोपाध्याय तनुज
भट्ट षड्भ्रातृरामकृष्णोपाध्याय ( मणिचन्द्र ) विरचितः

# श्रीदेशिकालंकार समुच्चयः

*—●—*

## * मङ्गलाचरणम् *

भास्वत्कन्यातट मभिशुभश्रीपशाखासु लब्ध्वां ।
दोलां लोलामुपगतवती केनचिद्बर्हिणेयम् ॥
चञ्चच्चीनाञ्चल नवलसत्पक्षतिप्रेङ्खलक्ष्मीम् ।
तन्वानो वो दिशतु सुचिर भावुक राजहंसी ॥ १ ॥

आश्लिष्यति व्रजवरे कुहचिन्निकुञ्ज- ।
गेहेऽङ्किते कुचयुगे पृथुसूत्रिकाभिः ॥
भूयोनिराकृतिकृते विततेऽपि यत्ने ।
चण्डातकापहरणाऽध्यवधिं स्तवीमि ॥ २ ॥

व्रजक्ष्मापक्ष्मललोचनाग्रणी- ।
समुन्मिषन्मानसनित्यमण्डनम् ॥
अनारतानीतविनीतगोरवम् ।
गृहीतगोवर्धनगौरवं भजे ॥ ३ ॥

बालो गोकुल पालोत्सङ्गे क्रीडन् क्वचिज्जयति ।
घटयत्यविरतमेतद्यस्य क्षणवीक्षणक्षणोविश्वम् ॥ ४ ॥

घनगर्जनमाकलयन्मातु. क्रोडात्समुद्गतोनृत्यन् ।
करविधृतनवनीत मिन्वन्मुग्धोव्रजे विभुर्ज्जयति ॥ ५ ॥

चम्पावने लक्ष्मणदीक्षितेन ।
चिरन्तनै. पुण्यचयैरवाप्तम् ॥
अनुग्रह ग्राहतयैकलभ्यम् ।
सौभाग्यमव्याहत माश्रयाम ॥ ६ ॥

अथार्थालङ्कारा

उपमा

उपमा यत्र सादृश्यलक्ष्मी रुल्लसतिद्वयो.

श्रीदेशिकवरवाचो जयन्ति चेतसि सुख विवृण्वत्य. ।
राकाकामुकरुच इव निर्मलयन्त्यो मुहुर्निखिलम् ॥ ७ ॥

एकदेशवर्त्तिन्युपमा

वल्लभगिरोविभान्ति स्तनैरिव निबन्धनै र्मुहु पुष्टै ।
सूत्राख्यानैर्नयनै कान्त्यावपुष गुणोधिन्या ॥ ८ ॥

मालोपमा—

मनुसंत्यैरिववागी सद्भिर्वृत्तै रिवात्मन पूर्सि ।

वृन्दावनवरचरितैर्वल्लभमणितिर्मुहुर्घृणुते ॥ ९ ॥

उपमेयप्रचुरोपमा—

येषा वृत्त वचन दर्शनममृतमिव दिशति च प्रमदम् ।
तान्वल्लभान्नमामो निगमाम्बुधिपूर्णिमाचन्द्रान् ॥ १० ॥

उपमानप्रचुरोपमा—

वल्लभमणिति स्वाद्वोरसभर सरसीव सोमसुषमेव ।
पीयूषधुनोवेय तृम्फति कल्पद्रुवन्येव ॥ ११ ॥

अन्योन्योपमा—

वागिवबोधाचर्य्या चर्य्येव च वाक् विराजतेयेषाम् ।
तान्नौमिवल्लभार्य्यान्कुमतिनिशाशारणद्युमणीन् ॥ १२ ॥

रसनोपमा—

देशिकरूप कान्त्या विधूयतेऽमृतभरैर्विधुस्तेषाम् ।
वचनायत इह वचन ज्ञावैर्गीतायतेनूनम् ॥ १३ ॥

अनन्वय —

उपमानोपमेयत्व यदेकस्यैव वस्तुन ।

देशिकवाणोश्वव ! तव वाणीव शुभति सुबोधिनी वाणो ।
निखिल जागरयन्त्रो भाइव भा भ्रजते भानो. ॥ १४ ॥

उपमेयोपमा–

पर्य्यायेण द्वयोस्तच्चेदुपमेयोपमामता ।

अर्थसुधेवच रम्या देशिकवर ! ते विराजते वाणी ।
वाणीवार्थसुधेयं सततं विदुषां मुदं दधती ॥ १५ ॥

प्रतीपम्–

प्रतीपमुपमानस्योपमेयत्वप्रकल्पनम् ।

भासा बिभर्त्तिसाम्यं भास्वान् तेवल्लभप्रवर ! नूनम ।
सुर गुरुरपिधिषणांते बहुश स्पर्धा–वहांधत्ते ॥ १६ ॥

रूपकम्–

विषय्यमेदताद्रूप्यरञ्जनं विषयस्ययत् ।

[1]असतां देशिकतरणि जंगतामन्तस्तमासि संकषयन् ।
सत्पथमाविष्कुर्वन् विबुधमनःसारसं सुखयन् ॥ १७ ॥

१ प्रकाशताम्

एकदेशवर्त्तिरूपकम्–

श्रीमद्देशिकवदनज्योस्नापीयूष मभिचिकमिषन्ते ।
कोविदचकोरका येतांश्चतुरःको न चोकोतु ॥ १८ ॥

प्रतिवस्तूपमा–

देशिकनिचयेष्वद्भुतदीप्तिः श्रीवल्लभःपरं कनति ।
वारणवृन्दे कश्चन मुक्तायुक्तोगजो भवति ॥ १६ ॥

परिणामालङ्कारः –

परिणामः क्रियार्थश्चेद्विषयी विषयात्मना ।

देशिकदयाम्बुधीनां चरणाम्बुज माश्रयामहे सततम् ।
यज्जुषमाणो मनुजस्तापत्रयतोजन तनुते ॥ २० ॥

अधिकारूढवैशिष्ट्यवान्–

परिणामः–

देशिकवाणीविसराः कार्य्यं कार्य्यं विवर्त्तयन्तोऽमी ।
अन्तस्तमो घ्नन्तो मिहिरद्योता विनिद्रान्ति ॥ २१ ॥

उल्लेखः–

बहुभिर्बहुधोल्लेखादेकस्योल्लेख इष्यते ।

द्युतिमद्भिः र्भास्वानिति विबुधैर्वाचस्पतिरिति समजल्पि ।
करुणाप्रवण शरणं नमता तं देशिकं नमत ॥ २२ ॥

स्मरणम्–

सदृशानुभवाद्वस्तुस्मृतिः स्मरणमुच्यते ।

सन्देहान्वरमाणं सिद्धान्तान्निर्भयं समाख्यान्तम् ।
देशिकवर्य्यं दृष्ट्वा गीतावक्तुः स्मरन्तः स्मः ॥ २३ ॥

भ्रान्तिमान्–

साम्यादतस्मिंस्तद् बुद्धिर्भ्रान्तिमान् प्रतिभोत्थितः–

देशिकमुख्ये वक्तरि देवा धिषणं कविञ्च दैतेयाः ।
मनुजा गीतावचसां गदितारं मन्वते नियतम् ॥ २४ ॥

सन्देहः–

सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः ।

धी र्भवति श्रीवल्लभ देशिकवचनं निशाम्यतां नृणाम् ।
नूपुरनिनदो लक्ष्म्या वाणी वीणा क्वणः किंवा ॥ २५ ॥

अपन्हुतिः–

प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपन्हुतिः ।

नायं राकाचन्द्रो धिषणमुखं भवति देशिकप्राग्र्यान् ।
वीक्ष्य क्रुध्दं चिन्ताम्बितं मध्ये ततो मलिनम् ॥ २६ ॥

उत्प्रेक्षा–

सम्भावनास्यादुत्प्रेक्षा ।

यातीव देशिकानां त्रिदिवंचन्द्राभिधो यशस्तोमः ।
दातुं व्रजवरणागं सत्पथमासत्प्रकाशयितुम् ॥ २७ ॥

अतिशयोक्तिः–

सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते ।

दर्शनमात्राद्भवतो दैशिक ! संसृति निवृत्तिरजनिष्ट ।
पश्चाच्चत्तदुपदेशोऽजनीति जगत्तां महाश्चर्य्यम् ॥ २८ ॥

तुल्ययोगिता–

वर्ण्यानामितरेषां वा धर्मैक्य तुल्ययोगिता ।

जाड्य हिनस्ति जगतां भवतां भानोश्च समुदयन्द्योतः ।
को वो देशिकभानून्भजमानो नो भवेल्लोके ॥ २९ ॥

दीपकम्–

वदन्ति वर्ण्यावर्ण्यानां धर्म्मैक्यं दीपकं बुधाः ।

प्रस्तुताप्रस्तुतानामेकधर्म्मान्वयो दीपकम् ।
देशिकवल्लभशास्त्रोद्योतो नः सत्पथं प्रकाशयति ।
अपनयते ननु दुष्टाद्वृत्ताद्हृदय प्रबोधयति ॥ ३० ॥

मालादीपकम्–

दीपकैकावलीयोगान्माला दीपकमिष्यते ।

तव दययाहं प्राप्तो मयापिदेशिक ! विशुद्धता प्रापि ।
संसृतिनाशश्चतया तेन श्रीपति पदप्रीतिः ॥ ३१ ॥

आवृत्तिदीपकम्–

त्रिविधं दीपकावृत्तौ भवेदावृत्ति दीपकम् ।

दीपकस्य अनेकोपकारार्थतया दीपस्थानीयस्य पदस्यार्थ–
स्योभयोर्वा आवृत्तौ आवृत्तिदीपकम् ।

रेषति देशिकवाणी तमांसि भूयांस्यवान्तरङ्गाणि ।
रेषति दिनमणिदीप्ति स्तमांसि बहिरङ्गवृत्तानि ॥ ३२ ॥

दृष्टान्तः –

दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम् ।

अर्दयते ते देशिक दर्शनमश्रान्त मुद्गतान्पङ्कान् ।
तर्दति तरणेर्द्योतो निखिलं सन्तमसविस्तारम् ॥ ३३ ॥

निदर्शना–

वाक्यार्थयो. सदृशयोरैक्यारोपोनिदर्शना ।

सब्रह्मचारितां किलवल्लभधत्तेवचःश्रुतीनांते ।
अर्जुनसारथिवचसां कुहचनमैत्री मुहुस्तनुते ॥ ३४ ॥

व्यतिरेकः –

व्यतिरेको विशेषश्चेदुपमानोपमेययो ।

साम्य गुरुत्वधीभ्या देशिकवरधिषणयो क्वचिन्नूनम्– ।
परमनुराग श्रीपति - पादाम्बुजयो र्नहि स्वर्गे ॥ ३५ ॥

## सहोक्तिः—

सहोक्तिः सहभावश्चेद्भासते जनरञ्जनः—

चित्रं वल्लभदेशिकभास्वत्पादाम्बुजानुरागेण ।
सहसैव सहोदयते व्रजसुदती हिमकर प्रीतिः ॥ ३६ ॥

## विनोक्तिः—

विनोक्तिश्चेद्विना किंचित्प्रस्तुतं हीनमुच्यते—

नह्यनवद्या विद्या वल्लभ सिध्यान्तमन्तरा कापि ।
नह्यनवद्य कृत्य श्रीशार्चिति विना किमपि ॥ ३७ ॥

अस्माक वल्लभवर पदराग जुषांविधुं विना प्रमद. ।
तरणि विनापिसमत प्रकाश उज्जृम्भते प्राज्य. ॥ ३८ ॥

## समासोक्ति—

समासोक्ति समैर्यत्र कार्य्यलिङ्ग विशेषणै र्व्यवहार समारोपः प्रस्तुतेऽन्यस्य वस्तुनः—

वल्लभ देशिकवर ते वासवकाष्ठां यशोविधुर्बहुश ।
सविश्याय सम्प्रति वरुणाशामिसना कुरुते ॥ ३९ ॥

## परिकरः—

अलङ्कार. परिकरः साभिप्राये विशेषणे ।

जगतामुद्धर्त्तारं वल्लभवर मानता दयासिन्धुम् ।
भवभीभोरगा. साधन हीना दोना वयं नित्यम् ॥ ४० ॥

परिकरांकुरः –

सामिप्राये विशेष्येतु भवेत्परिकरांकुर॰ ।

त्यक्त्वा पितामहमियं वल्लभमिह भारती परिष्वजते ।
देशिकवल्लभवर्य्यो हृदि न. स विराजता नित्यम् ॥ ४१ ॥

श्लेष –

नानार्थसश्रय श्लेषो वर्ण्यावर्ण्योभयाश्रित. ।

निघ्नन्निखिलतमासि प्रबोधयन्नात्मन[1] स्वरूपाणि[2] ।
अधिसन्मार्गं गमयञ्जयति [3] सदादेशिकोदेव ॥ ४२ ॥

अप्रस्तुतप्रशसा–

अप्रस्तुतप्रशसा स्यात्सायत्रप्रस्तुताश्रया ।

अनुपाश्रित्य पदाब्जे देशिक ! ते य श्रम मुधा धत्ते ।
स तु तुषमपगतसारं वार वार वृथा वपति ॥ ४३ ॥

प्रतीयमानोत्प्रेक्षा–

भूमेः प्रदक्षिणाया याते त्वयि देशिक क्वचिद्भीत ।

---

१ ब्रह्मणः स्वस्य । २ जीवान्तर्यामि प्रभृतीन अथवा रामकृष्णाद्यवतार रूपाणि परमात्मनः । ३ गुरुः अथवा सदापथिको देवो दीप्तिमान् य. सदाचलन्वर्त्तते भास्कराख्यो देव. । अन्यत्र गुरु. सदा दीप्तिप्रमोदमयः ।

अप्युदसृज्यत तापं मेघान्तर्निस्सृतस्तपनः ॥ ४४ ॥

वल्लभदेशिक वर्य्ये लोचनयो रञ्चिते मुहुर्नृणाम् ।
अज्ञाने ननु रुजित लसितञ्च श्रोशरागेण ॥ ४५ ॥

हेतुगर्भोत्प्रेक्षा—

व्रजभुवि यात्रा कृतवति देशिक सम्राजि वल्लभाचार्य्ये ।
प्रेष्ठस्यालभनादिव, पुषिता मुदिता धरा जयति ॥ ४६ ॥

प्रस्तुताकुरः—

प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुताकुरः ।

अजाहचल कुहचन सावित्री भारतीमभाषिष्ट ।
अपि वल्लभे सति त्व द्रुहिणं श्रयसे नु सत्यं किम् ॥ ४७ ॥

पर्य्यायोक्तम्—

पर्य्यायोक्तन्तु गम्यस्य वचो भङ्ग्यन्तराश्रयम् ।

माधुर्य्यैर्यद्वचसा वाणी वीणारिरसनायासाः ।
विफलास्ताञ्छ्रीवल्लभदेवान्वन्दामहेऽविरतम् ॥ ४८ ॥

व्याजस्तुति—

उक्ति र्व्याजस्तुति र्निन्दास्तुतिभ्यां स्तुतिनिन्दयोः

देशिकवर तव भासा शैत्यैरिन्दुर्घनेघने गूढः ।
तासा तपने स्तपनस्तप्तो वारां निधौ मग्नः ॥ ४९ ॥

व्याजनिन्दा–

निन्दाया निन्द्या व्यक्ति र्व्याजनिन्देतिगीयते ।

पापविधानकरास्तान् ब्रूमस्त्व देशिकेश ! कार्य्य स्वम् ।
स्वैर कुरु पापनिरा- करण शरण जुषा नित्यम् ॥ ५० ॥

आक्षेप –

आक्षेप स्वयमुक्तस्य प्रतिषेधो विचारणात् ।

कल्पद्रुमेण कि यदि देशिकसान्निध्यमेजते येषाम् ।
किं [illegible] नु योगे यदि तच्चरणाब्जयो प्रीति. ॥ ५१ ॥

शब्दकृतो विरोध –

आभासत्वे विरोधस्य विरोधाभास इष्यते ।

गोसयमम्[1]पदिशता ननु गोवर्धनरुचिमभिसन्दधता[2] ।
देशिक ! भवता भवतः केनहि सन्तारिता स्वैरम् ॥ ५२ ॥

---

१ इन्द्रियसयमम् । २ गोवर्धनम् इन्द्रियवर्धन पोषणम् वस्तुत - गोवर्धनः श्रीगिरिराज. अथवा गवा वर्धनम् ।

अर्थकृतो विरोधः –

साधनहीनशरण्ये देशिक वचने विराजिते सत्यम् ।
हर्म्यं कण्टकविपिनम् सुदृशा गी कर्णयो. शूलम् ॥ ५३ ॥

विभावना–

विभावना विना हेतु कार्य्योत्पत्तिर्यदुच्यते ।

अकृतावतिकारुणिकाननाश्रितेष्वप्यदेयमाददतः ।
अनलङ्कृतिरमणीयान् को नहि तान्देशिकान् श्रयतु ॥ ५४ ॥

विशेषोक्ति –

कार्य्याजनिर्विशेषोक्ति. सतिपुष्कलकारणे

त्वय्यनुरागे देशिक ! भूमिभृतोऽपि प्रमत्ततां [illegible]
नि स्वा अपि समुखिनो भवन्ति नित्य मुहुर्मुदिता ॥

असभव –

असम्भवोऽर्थनिष्पत्तेरसंभाव्यत्ववर्णनम् ।

लक्ष्मणबालो विद्या - नगरे को वेद वैदुषीगर्वं ।
उद्धृतिमुपेयुषस्तान् विदुषो विजयेत खेलाभिः ॥ ५६ ॥

असङ्गतिः –
कार्य्यकारणयोर्भिन्नदेशतायामसङ्गति. ।

सहजकृपाब्धे देशिक ! भवतो जनिरजनि चम्पकारण्ये ।
समवादिषत घनानक - मुरजा स्त्रिदिवेशनिलयेषु ॥ ५७ ॥

विषमम्–

विषमं वर्ण्यते यत्र घटनाऽननुरूपयो. ।

दर्शं दर्शं तव ता सुबोधिनी गोर्पतिर्मुहुर्मोहम् ।
कलयन्देशिकवल्लभ ! किमिदं दोलायतेऽत्यर्थम् ॥ ५८ ॥

समम्–

समं स्याद्वर्णन यत्र द्वयोरप्यनुरूपयो ।

हित्वा पूर्व वाणी वल्लभ मनुरूपमावृणातीति ।
दृष्टवा सरसा ब्रुवते द्युमणि स्वैर प्रभा प्रवते ॥ ५९ ॥

विचित्रम्–

विचित्रंतत्प्रयत्नश्चेद्विपरीत: फलेच्छया ।

चित्रतपन्ति कृच्छ्रे निस्तापार्थ तपस्विनस्तापान् ।
सरस महन्तु श्रीमद्वल्लभपादाब्ज मश्नामि ॥ ६० ॥

अधिकम्–

अधिकं पृथुलाधारादाधेयाधिक्यवर्णनम् ।

रमणीयतमार्थानां देशिकवचसां जगति मुहुर्व्याप्तौ ।
कतमस्य भवेद्वाच: स्थान मान कुत.क्वेव ॥ ६१ ॥

अल्पम्–

अल्पन्तु सूक्ष्मादाधेयाद्यदाधारस्य सूक्ष्मता ।

सूक्ष्मतमा सारभरा ध्यानाऽध्येयं विभुं मुहुर्दधती ।

स्वेषां विज्ञापयते देशिक ते काप्यसौ वाणी ॥ ६२ ॥

अन्योन्यम्–

अन्योन्य नाम यत्रास्यादुपकार परस्परम् ।

दीनदयार्णव देशिक ! वाणी ते शोभते व्रजवरेण ।
स व्रजवरोऽपि वाण्या त्वदीयया शोभते नूनम् ॥ ६३ ॥

विशेष. –

विशेष रख्यातमाधार विनाप्याधेयवर्णनम् ।

देशिक मत्वा वितथ जन पदार्थेषु दूयते येषु ।
सत्यमखिलमिति तैं स्त व्रजेन्दुमनुयोज्य मोदयसि ॥ ६४ ॥

व्याघात –

स्याद्व्याघातोऽन्यथाकारि तथाकारि क्रियेत चेत् ।

बन्धनमुपयाति यया ससृत्या वल्लभार्य्य ! लोकोऽयम् ।
मुक्तो व्रजपतिपरया तया तव दया प्रभावेण ॥ ६५ ॥

कारणमाला–

गुम्फ कारणमालास्याद्यथाप्राक्प्रान्तकारणै. ।

वल्लभपदानुरागस्तस्माच्चेतोविशुद्धता हृद्या ।
तस्या व्रजचन्द्र रतिस्ततोऽत्र कि किं न न सिद्धम् ॥ ६६ ॥

एकावली–

गृहीतमुक्तरीत्यार्थश्रेणिरेकावलिर्मता ।

भारतनूर्जनिस्तत्र द्विजत्वमपि तत्रवैदुषीभावः ।
तत्र व्रजविधु रागस्तत्रचवल्लभपदप्रीतिः ॥ ६७ ॥

### सारः –

उत्तरोत्तरमुत्कर्ष.सार इत्यभिधीयते ।

नृषु जननं विप्रत्वं बोधस्तत्रापि गोकुलेवासः ।
सारो व्रजविधुरागो वल्लभचरणानुगत्वञ्च ॥ ६८ ॥

### यथासख्यम् –

यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः ।

चम्पाकाननकुसुमं चेतोऽहन्त्व व्रजाधिपप्रीतिम् ।
चेतति वृश्चति यच्छति रूच्यं तच्चर्चयेऽजस्रम् ॥ ६९ ॥

### पर्य्याय. –

पर्यायोयदि पर्य्यायेणैकस्यानेकसश्रय. ।

भवतो भाष्यं दृष्टवा वल्लभ ! मन्यामहे ननु प्रज्ञा ।
कृतिकृनचमरकृतिस्त्वाम् बृहस्पतिञ्च क्रमाच्छ्रयते ॥ ७० ॥

### परिवृत्ति –

परिवृत्तिर्विनिमयो न्यूनाभ्यधिकयोर्मिथः ।

देशिक दयासुधाब्धे ! तव चरणाम्भोजगोरहृ दत्त्वा ।
प्रणति दीनो हीनो व्रजपतिरतिशेवधिं गृह्ये ॥ ७१ ॥

### परिसख्या–

परिसंख्या निषिध्यैक मेकस्मिन् वस्तुयन्त्रणम्

भवतां देशिकवर्य्या ! जातेकरुणाकटाक्षनिक्षेपे ।
श्रीपतिवीक्षाकामो जावानामपकृतो भीत. ॥ ७२ ॥

विकल्पः –

विरोधे तुल्यबलयो र्विकल्पालंकृतिर्मता ।

गुरुवरवल्लभवाणी पद पदं जन्युतापमादृणती ।
अथवा हृद्या सरसा सुरस्रवन्ती क्वचित्प्रसरति ॥ ७३ ॥

समुच्चयः –

बहूना युगपद्भावभाजां गुम्फः समुच्चय ।

दिष्टया तमांसि जगतां युगपत् तुमितुं समुद्गतौ दिव्यौ ।
चम्पारण्ये वल्लभतरणिः पूर्वे रविश्चान्यः ॥ ७४ ॥

कारकदीपकम्–

क्रमिकैकगतानान्तु गुम्फ. कारकदीपकम् ।

वल्लभदेशिकवाणी क्षपयति पाप मनः प्रणेनेक्ति ।
ससृतिमभिसञ्जपयति वरयति गोकुलवधूकमनम् ॥ ७५ ॥

समाधि. –

समाधि कार्यसौकर्यं कारणान्तरसन्निधे ।

भवतप्तान्भागवते व्यासेनोक्ते ऽवितुजनान्दैवात् ।
उपकर्त्तमजनिकरुणाम्बुनिधि स सुबोधिनीकारः ॥ ७६ ॥

प्रत्यनीकम्–

प्रत्यनीक बलवत. शत्रोः पक्षे पराक्रमः ।

क्रोधातष्टोऽनेष्ट क्षमा याञ्जोवो जयन्तु तेऽजस्रम्
समवन्तोऽस्मान्दययोद्धरयन्तो वल्लभाचार्याः ॥ ७७ ॥

## अर्थापत्तिः –

कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते ।

स्मरण दे शक ! दाशति तूर्ण ते निखिलकिल्बिषक्षपणम् !
श्रीपतिदृढानुराग शरणगतौ किं वयं ब्रूमः ॥ ७८ ॥

## काव्यलिङ्गम्–

समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम् ।

श्रीमद्वल्लभदेशिक तपन प्रचुर प्रवर्चयत्यखिलन् ।
गीर्पति भार्गवमुख्या अस्त तूर्णञ्च चाययति ॥ ७९ ॥

## अर्थान्तरन्यास –

उक्तिरर्थान्तरन्यासः स्यात्सामान्यविशेषयो ।

लोका देशिकवचमा पालनमभिकुर्वतामसन्देहम् ।
जीवोद्धार पराणा भवन्त्यगुक्तानि नोक्तानि ॥ ८० ॥

## विकस्वर –

यस्मिन्विशेषसामान्यविशेषा सविकस्वर ।

विविधै र्विबुधैर्यत्नै र्नाज्ञायत वल्लभस्य वैदुष्यम् ।
दैवा अतलस्पर्शा उदधय इव मानवा जगति ॥ ८१

## प्रौढोक्ति –

प्रौढोक्तिरुत्कर्षाहेतौ तद्धेतुत्वप्रकल्पनम् ।

वैरूप्याद्वृद्धत्वा त्पितामहत्वाद्विधेरियं चपला ।
बहु शोवल्लभवर्ये लगती भारती वृणुते ॥ ८२ ॥

सम्भावना-

सम्भावना यदोत्थं स्यादित्यूहोऽन्यस्य सिद्धये ।

यदि गीर्पतिसाहस्री पितामहपरस्सहस्रदिव्याद्रान् ।
प्रपठेद्वल्लभदेशिकवैदुष्य प्राप्नुयात्क्वापि ॥ ८३ ॥

मिथ्याध्यवसिति. -

किञ्चिन्मिथ्यात्वसिध्यर्थं मिथ्यार्थान्तरकल्पनम् मिथ्याध्यवसितिः

कूर्म्मोदुग्धे पुष्टो यः प्रासाद यदि श्रयेल्लोक ।
देशिकनमनविहीनो लभेत सश्रीपते पुष्टिम् ॥ ८४ ॥

ललितम्-

वर्ण्येस्याद्वर्ण्यवृत्तान्तप्रतिबिम्बस्य वर्णनम् ललितम् ।

कश्चन जल्पति - वल्लभनमन कुर्वति जनिवति ननुनैजम् ।
जनन निखिल सफल सुकृती कुरुते स निर्वार्य्यः ॥ ८५ ॥

प्रहर्षणम्-

उत्कण्ठितार्थं ससिद्धिर्विना यत्न प्रहर्षणम् ।

श्रीपतिपदसाधनमिति, मत्वा वल्लभपदाम्बुज पृञ्चमः ।
सहसैव श्रीजानेश्वरगाञ्जोपार्गाज्ञि श्चित्रम् ॥ ८६ ॥

प्रहर्षणम्-

वाञ्छितादधिकार्थस्य ससिद्धिश्च प्रहर्षणम् ।

चित्ततमोमीत्यै मे देशिकवाणी प्रकाशमाश्रयतः ।
उदमायिषत श्रीधवरागविभाकरकरद्योता. ॥ ८७ ॥

प्रहर्षणम्–

यत्नादुपायसिध्यर्थात्साक्षाल्लाभः फलस्य च ।

श्रीपतिपदलिप्सां हृदि दधतो देशिक मभिप्रयातो मे ।
तदधिगतिरयत्नसहा यया, दया सा मदा जयतु ॥ ८८ ॥

विषादनम्–

इष्यमाणविरूद्धार्थसप्राप्तिस्तु विषादनम् ।

सन्निधिरलम्भि वल्लभ - गुरोश्च शिष्यत्वमैषिषच्चेतः ।
यै र्नाऽपि च तच्छरणम् श्वसता मरणं न किन्तेषाम् ॥ ८९ ॥

उल्लासः –

एकस्य गुणदोषाभ्यामुल्लासोऽन्यस्य तौ यदि ।

गुणजन्योल्लासः –

श्रीजानेर्व्रजलीलां गरितुं गूर्वन्तमहते वाणी ।
मां पविता वल्लभ इति, मत्वा य, तं नमस्यामि ॥ ९० ॥

दोषजन्योल्लासः –

नर्गुणिताख्यानान् किं ब्रूमन्तान् यैर्व्यंतानि नैर्गुण्यम् ।
वृतगुणवल्लभवचनै रूपास्महे व्रजविधुं सगुणम् ॥ ९१ ॥

उभयजन्योल्लासः –

दौर्भाग्य जनुषो यन्नाराधि दयाब्धिवल्लभाधीशः ।
सौभाग्य यच्छ्रीपतिसौन्दर्य्य नेत्रयोरजनि ॥ ९२ ॥

अवज्ञा–

ताभ्यां तो यदि न स्याता मवज्ञालंकृतिस्तु सा ।

श्रीवल्लभाङ्घ्रिपङ्कजरजसां कल्याण सम्पदां ददताम् ।
का हानि र्झञ्झोद्यद्रजसि समुद्धूतवति प्रचुरम् ॥ ६३ ॥

अवज्ञा–

सति देशिक करुणामृत ।

वरुणाऽऽवासेऽपि नापितन्नमृतम् ।
हतभाग्यैरितिलघुता का स्यादस्याम्बुधेर्वाच्या ॥ ६४ ॥

अनुज्ञा–

दोषस्याभ्यर्थनानुज्ञा तत्रैव गुणदर्शनात् ।

दैन्यं भूपाद्यस्माद्देशिकचरणाम्बुजानुरागो मे ।
तत्तेन व्रजमुदृशामुरोजगारुत्मत रक्तम् ॥ ६५ ॥

लेश –

लेश स्याद्दोषगुणयोर्गुणदोषत्व कल्पनम् ।

वृक्षान् पशूंश्च पक्षीन् दुष्टान्म्लेच्छान्समुद्धरन् सततम् ।
आस्से देशिक ! यत् तत् तवानि कारुण्यजन्यत्वम् ॥ ६६ ॥

वैकुण्ठपतेराज्ञा ममानयन्नपिपुनः पुनर्ज्जाताम् ।
करुणातिशयत्वं यो दोषं दाधेति तंवन्दे ॥ ६७ ॥

मुद्रा–

सूच्यार्थ सूचनं मुद्रा प्रकृतार्थपरै. पदै. ।

आर्य्याऽचरणं वल्लभ ! वृत्तं तेऽज्ञापयच्च पूर्वंनः ।
वेषं वेदैर्मधुरं मधुरिपुरुचिरं पुनर्वचनम् ॥ ६८ ॥

रत्नावली–

क्रमिकं प्रकृतार्थाना न्यास रत्नावली विदुः ।

वागीश श्रीकान्त सर्वज्ञ कल्पभूरुह श्रयताम् ।
अज्ञाननिग्रह कर करुणाब्धि वल्लभवन्दे ॥ ९९ ॥

तद्गुण. –

तद्गुण स्वगुणत्यागादन्यदीय गुणग्रहः ।

देशिक विद्याचन्द्रज्योस्नेय मध्यतोभृशश्वेत कृत्वाशशधर ।
मारान्द्रजना विभ्रामयन्त्यास्ते ॥ १०० ॥

तिरस्कार –

माभून्ये स्वास्थ्य यत् ससृत्यटवो मभिव्रजन्मुग्ध ।
देशिककरुणा कलितनाध्येमि श्रीधवपदाब्जम् ॥ १०१ ॥

पूर्वरूपालङ्कार –

पुनः स्वगुण सम्प्राप्ति पूर्वरूपमुदाहृतम् ।
पूर्वावस्थानुवृत्तिश्चविकृते सति वस्तुनि ॥

अपि यति वल्लभभास्वति भवने स्वीये सुबोधिनीत्यखिलम् ।
तुभ्यन्त्यपते तिमिर काचने जगति द्युति सततम् ॥ १०२ ॥

अतद्गुणः –

सङ्गतान्यगुणानङ्गीकारमाहुरतद्गुणम् ।

कृष्णरसाम्बुधिमग्ने वल्लभदेवेक्वचिन्नकालुष्यम् ।
तस्मिन्मम सार्वदिको भूयात्कृष्णानुगोरागः ॥ १०३ ॥

अनुगुण. –

प्राक्सिद्धस्वगुणोत्कर्षोऽनुगुणः परसंनिधेः ।

व्यासोक्तो रमणीया वल्लभमणितिस्ततः पुना रम्या ।

रमणीयतमा राजति सुबोधिनी बोधिनो विदुषाम् ॥ १०४ ॥

मीलितम् –

मीलित यदि सादृश्याद्भेदएव न लक्ष्यते ।

देशिकवर ? प्रतापो विश्वेऽस्यिन् देद्युतीति नूनं ते ।

दीना विप्रा अर्घ्यं दातुं तरणि विचिन्वन्ति ॥ १०५ ॥

सामान्यम् –

सामान्य यदि सादृश्याद्विशेषोनोपलक्ष्यते ।

धवलपरिच्छदरम्या. सदस्युपेता बुधा न ते दृष्टा. ।

देशिकवदन निशाकर किरणनिचयचर्चितात्मान. ॥ १०६ ॥

उन्मीलितं –

भेदवैशिष्ट्ययो स्फूर्त्तावुन्मीलित विशेषकौ ।

व्याहारान्मिलितानपि वल्लवर धिषणयोः क्वचिन्नूनम् ।

विबुधा प्रतिपद्यन्ते गोकुलपतिचरणरागेण ॥ १०७ ॥

विशेषक: –

सतिसमविद्रत विबुधा आस्तिकनास्तिक कमलकुवलयानि ।

उदितेवल्लभमानावभगुरविभेक्वचिज्जगति ॥ १०८

उत्तरम्-

किञ्चिदाकूतसहितं स्याद्गूढोत्तरमुत्तरम् ।

कस्याश्रयणं वल्लभ-गुरोःक आराध्य इन्दिराधीशः ।
को वक्तव्यो विनतै रविरतमष्टाक्षरो मन्त्रः ॥ १०९ ॥

प्रतीयमानमुत्तरम्-

दीनाश्चरितैर्हीनाः ससृतिलीना जनाश्च किं तत्र ।
करुणा कर वल्लभ! तव करुणा सम्भाव्यते सहृनैः ॥ ११० ॥

सूक्ष्मम्-

सूक्ष्म पराशयाभिज्ञेतर साकूतचेष्टितम् ।

आगतवति वल्लभवर आङ्गिरस सुस्मितेक्षणैर्वाणी ।
सङ्केतयते किञ्चन, वाचामीशः स नः पातु ॥ १११ ॥

विहितम्-

विहित परवृत्तान्तज्ञातु साकूत चेष्टितम् ।

देशिकदर्शनमात्रात्साकूतं लोकयन्नृपो विदुषः ।
विजयार्चनसम्भारान् विजपुरेऽस्फावयत्प्रीतः ॥ ११२ ॥

व्याजोक्ति -

व्याजोक्तिरन्यहेतूक्त्या यदाकारस्य गोपनम् ।

वल्लभमभिसर्त्तुं किं, दक्ष सहृति भारती क्वचित्पृष्टा ।
ईक्षिष्ये भारत मिति सावित्री त्वेषतां ब्रूवती ॥ ११३ ॥

गूढोक्तिः –

गूढोक्तिरन्योद्देश्यं चेद्यदन्यं प्रतिकथ्यते मधुपालिनि ।

नवकमले सति किं जीर्णेऽनुरक्ति मावहसि ।
उद्दिश्य वल्लभ विधो सावित्री भारतीं ख्याति ।। ११४ ।।

विवृतोक्तिः –

विवृतोक्तिः श्लिष्टगुप्तं कविनाऽविष्कृतंयदि ।

शून्यान्नयामि दिवसानिह किं वल्लभ ! करोषि ना शून्यान् ।
इतिगदितो भारत्या वागीशो वल्लभोजयति ।। ११५ ।।

युक्तिः –

युक्ति परानिसन्धानं क्रियया मर्मगुप्तये ।

गच्छत्युपगोपेश्वरमर्हिणवस्तूनि दम्भतो दधती ।
वाणी वल्लभमाप्तुं य त वागीश्वर वन्दे ।। ११६ ।।

लोकोक्तिः –

लोकप्रवादानुकृतिर्लोकोक्ति रितिभण्यते ।

उष्ट्रासिकाऽधुना किं मुधैवमुधियः समास्थते स्वैरम् ।
वल्लभदेशिक चरण नमतां शरण समाश्रयत ।। ११७ ।।

छेकोक्तिः –

छेकोक्ति यंत्र लोकोक्तेः स्यादर्थान्तरगर्भिता ।

जानन्तु तएव यतो यैरिह मृगमोहिकाश्वमुह्यन्ते ।
सति वल्लभवरचरणे शरणे नृणां कुतो मोहः ॥ ११८ ॥

वक्रोक्तिः –

वक्रोक्तिः श्लेषकाकुभ्यामपरार्थप्रकल्पनम् ।

श्लेषवक्रोक्तिः –

वल्लभमयसि क्वाश्वो न, देशिकोद्देश एव, किं पथिकः ।
सामोद जृम्भन्ते सावित्री भारती वाचः ॥ ११९ ॥

काकुवक्रोक्ति –

दधतो पतिव्रतत्व चतुरे त्व वल्लभ नु न प्रवसे ।
इति सावित्री वाच. प्रविभान्त्यनुभारति क्वापि ॥ १२० ॥

स्वभावोक्तिः –

स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनम् ।

तव यद्यनुकम्पाऽभूत् देशिकवासव ।
सगोकुलेऽदर्शि बालो वात्से पृष्ठे तिष्टन्कूर्दन् हसन् गच्छन् १२१ ॥

भाविकम्–

भाविक भूतभाव्यार्थसाक्षात्कारस्य वर्णनम् ।

उद्धरसि पुरा नस्त्व तथापि दर्शं. समुद्धरन्भासि ।
उद्धारिताश्च वल्लभ ! चरितस्मृत्याऽधुनोद्धरसि ॥ १२२ ॥

उदात्तम् –

उदात्तम् द्धेश्वर्गित श्लाध्य चान्योपलक्षणम् ।

देशिकवल्लभ जनन यत्र अ तत्पालन स्वतोवन्हेः ।
चम्पारण्यगुण्य सघनैस्तरुभिस्सदा घृणुते ॥ १२३ ॥

अत्युक्तिः –

अत्युक्तिरद्भुता तथ्यशौर्य्यौदार्य्यादिवर्णनम् ।

तव वल्लभवैदुष्य ब्रूम किं ननु विधि कर्बिधिषणः ।
त्वत्तश्चाधीयत इति मीमासन्तेयतो विबुधा. ॥ १२४ ॥

निरुक्तिः –

निरुक्तिर्योगतोनाम्नागम्यार्थत्वप्रकल्पनम् ।

सत्य वल्लभ इत्यसि देशिक ! हित्वा विधि गिरां देवी ।
प्रचुरानुरागहृदया सतत सा त्वामुपाश्रयते ॥ १२५ ॥

प्रतिषेध –

प्रतिषेध प्रसिद्धस्य निषेधस्यानुकीर्त्तनम् ।

ना सौ बालक्रीडा शास्त्रार्थं हृति ब्रुवन्त आसन्ये ।
वल्लभ वटुक दृष्ट्वा स्तब्धा मुग्धा मुहुर्जाता. ॥ १२६ ॥

प्रतिषेध –

नाय वटुको बाल. साक्षाद्वागीश्वरोऽतीर्ण इति ।
वल्लभदेव दृष्ट्वा विद्यानगरे विदो ब्रुवते ॥ १२७ ॥

विधि: –

सिद्धस्यैव विधानं यत्तामाहुर्विध्यलंकृतिम् ।

देशिक ! करुणाकर तां तव किं ब्रूमः पदाब्जसम्पर्कात् ।
अर्जुनवृक्षा. क्षणात. प्रोदध्रज्यन्तयत्पुरतः ।। १२८ ।।

वल्लभ ! वाणी वृणुते त्वा मिति सत्यमसि वल्लभः प्रथितः ।
वाण्या हृदयेऽधिकृतो वागीशोऽप्यसि च सत्यं त्वम् ।। १२९ ।।

हेतु –

हेतोर्हेतुमता सार्धं वर्णनं हेतुरुच्यते ।

विश्वोद्धारविधाने वल्लभवर्य्यानुपागतान्भूमौ ।
वीक्ष्याऽऽमलते मुदिते निखिलेऽप्येकोऽन्ति क खेदम् ।। १३० ।।

हेतु –

हेतु हेतुमतोरैक्य हेतुं केचित्प्रचक्षते ।

वल्लभचरणाश्रयण व्रजयुवतीकान्तनिर्भरप्रीतिः ।
देशिक चरणस्मरण नव्य भव्य विजृम्भतेऽजसुम् ।। १३१ ।।

रसवदलङ्कार: –

स्मृत्वा वल्लभलासान् द्रुहिण वशाऽऽलिङ्गति प्रिय भावैः ।
वाण्युत्तिष्टत्यास्ते सुबोधिनीं सा क्षण पठति ।। १३२ ।।

प्रेय. –

विधिवर तन्त्रा वाणो वल्लभभावान्विलाससोल्लासान् ।

स्मृत्वा निमीलिताक्षी रतरसवारां निधौ मग्ना ॥ १३३ ॥

ऊर्जस्वि—

वाणी पितामहेनोज्ज्वलगुण रम्यं परीक्षितुं प्रहिता ।
स्तब्धा मुग्धाऽवास्थित वल्लभवर्य्यं निचायन्ती ॥ १३४ ॥

समाहितम्—

विजयपुरे शास्त्रार्थे प्रोद्धत रूपा अवैष्णवा विबुधा. ।
नहि विभो वल्लभवर दर्शन मात्रात्कुतो दीनाः ॥ १३५ ॥

भावोदयः—

जयतरुणा मदभरणाः सहसा कृतदेशिकाऽऽगमश्रवणाः ।
सश्रमवृतवर्णा अपि, मन्दाऽऽचरणाः क्षणं जाताः ॥ १३६ ॥

भावसन्धिः—

वाणी विधिं श्रयन्ती वल्लभमालोक्य लज्जमानाऽपि ।
क्वाप्युपजुघुक्षमाणा वेत्तुं समयश्च गूरयते ॥ १३७ ॥

भावशवलता—

विधिसावित्र्युपकण्ठाद् यातुं यस्तौ च वल्लभंवाणी ।
कुहचित्त्रपतेऽहृष्यति बिभेति बीक्ष्यंति विराध्यति चं ॥ १३८ ॥

प्रत्यक्षम्—

उभतितरां वल्लभवर - वाणी नः कर्णजाह आयाता ।
अमृतस्रवमधिनेत्र गोकुल विधुचन्द्रिकाकृऽनम् ॥ १३९ ॥

अनुमानम्-

सत्यत्वं मन्वाना जगतः श्रीशाश्रयञ्चतन्वानाः ।
ये सन्ति तैरनन्येऽकारिश्रीवल्लभाश्रयणम् ।। १४० ।।

उपमानम्-

प्रज्ञायां सुरगुरुरिव वृत्ते ये दाशरथिमनुहरन्ते ।
विजयन्ते ते देशिक - वर्य्याः श्रीवल्लभाचार्य्या ।। १४१ ।।

शब्दः -

ननु यद्दर्शनमात्राच्चेतस्तुष्टिः क्षणान्नृणां भवति ।
अग्नि वल्लभरूप त करुणाब्धिभजे नित्यम् ।। १४२ ।।

अर्थापत्तिः -

निरणायि श्रीवल्लभ - पदपङ्कजमृगविसारि रागोयत् ।
गोकुल सुदृशा दैव त तुष्टि पुष्टिस्ततो भवति ।। १४३ ।।

अनुपलब्धि -

सत्याभाव जगतो मानुष्यं श्रीव्रजाधिपे प्रविदुः ।
अनणुत्व जीवे ये, तैर्नाप्ता वल्लभाचार्य्या ।। १४४ ।।

सम्भवः -

श्रीमद्वल्लभदेशिक - पदराजोवानुरागमाकुरुत ।
गोकुल सुधांशुरागैर्यत स्वतो रक्तताया त ।। १४५ ।।

ऐतिह्यम्-

नाशिश्रियश्च वल्लभ मारात्सीर्नैवराधिकानाथम् ।

किं कुरुषे भुवि जनन व्यर्थं पथ्यं मुधामत्तः ॥ १४६ ॥

अनुकूलम्-

वल्लभचरणाश्रयणाज्जनन जुषां संसृतिर्मुहु श्लाघ्या ।
श्रीपति सेवा पुष्टा तुष्टिं ददती परत्रापि ॥ १४७ ।

उदाहरणालङ्कार. -

अत्यर्थगर्वनिवहैर्धूष्टोऽशिष्टोलभेत निन्द्यत्वम् ।
वल्लभदेशिकपुरतो यथाघटसरस्वती कितव ॥ १४८ ॥

असमम्-

गुरुवर वल्लभ भवतस्तैस्तै. साम्य गुणैर्दधानोऽन्य. ।
नासीन्नास्ति न भविता, भुवनत्रितये क्वचित्कोऽपि ॥ १४६ ॥

मिथम्-

वल्लभवरमनुरक्ता पितामह भारती क्वचिद्ब्रूते ।
गोवर्धनवृन्दावम यमुना वीक्षा मन श्रयते ॥ १५० ॥

ससृष्टि -

स्नौतीव कर्णजाहेऽमृतमभितो देशिकेशवाणीन· ।
गोपंतिधीरिवसूते साफल्य सर्वतो भावि ॥ १५१ ॥

सङ्कर. -

देशिक भास्वान् स्वकरैर्जागरयन्निव मुहुर्ज्जनानखिलान् ।
दीप्तिसुबोधिनी स्वां प्रदिशन् विद्योत ता नित्यम् ॥ १५२ ॥

अथकेचन—

शब्दालङ्काराः —

अनुप्रासः शब्दसाम्यं वैशम्येपि स्वरस्ययत् ।

वृत्यनुप्रासः —

चिन्तातान्ति नितान्त वान्तिविकलस्वान्तातिं चान्त्युग्रताव्य-
प्रोद्यद्भूत भैरवज्वर भराविश्रान्तदान्त्यद्भुतः ।
नित्यं देशिकवर्य्य ! ते विजयते निर्व्याज भागोन्मिषत्सार-
ल्यामृत भारि निर्भर दयोदञ्चत्कटाक्षोदयः ॥ १५३ ॥

मध्यान्तानुप्रासः —

यो जेहते तवगुरो ! चरितु वचांसियश्चेहते तवपदेतनितुं नमांसि ।
सुन्वन्ति सन्ततततानि न तं तमांसि धुन्वन्ति न क्वचनतानि-
च त रजासि ॥ १५४ ॥

आद्यन्तानुप्रासः —

श्रीमद् गुरो ! मम मतिर्बुधवर्णनाति-
वृत्तं न वक्तु मलते भवदीय वृत्तम् ।
श्रीमत्स रोन्मदजनैरवमाननाति-
भक्तिगता भजतु ते चरणाब्ज भक्तिम् ॥ १५५ ॥

विषमाष्टानुप्रासः -

उन्निद्रयन्ति करणाकरण प्रसुप्तान्-
उन्मुद्रयन्ति सकृदानमतां मनांसि ।

यमकानुप्रासः -

श्रयत विश्वनताङ्घ्रिसरोरुह-
नतसुरद्रुम वल्लभदेशिकम्
वदत कः क्वचनालभताखिले
प्सितमसतमस तमसश्रयन् ॥ १६१ ॥

विजयते ननु वल्लभ देशिक .
प्रवरपादयुगाम्बुजशाम्रिके ।
तवरजोनिचयश्रणयन्नृणां-
भृशमनश्शमनश्शमनश्वरम् ॥ १६२ ॥

समाष्टानुप्रासः -

गुरुवर ! तव दृष्टिर्भाग्यपीयूषवृष्टि-
र्बहुलमुक्तजिष्टि दुष्टदौर्जन्यरिष्टिः ।
निखिलदुरितमुष्टिःकामसदोह पुष्टिः -
प्रदिशतु मम दुष्टिस्तोमनष्टि सतुष्टिः ॥ १६३ ॥

विरोधाभास. -

करुणापारावारो वल्लभदेवः सदापापात् ।
गोपायतु नोदीनान्सन्तत संसृतिसरोसृपाश्रीरान् ॥ १६४ ॥

चापबन्ध—

योजयत्यखिलं नित्यं क्षेमैः श्रीशानुरागजैः ।
जैत्रतद्वल्लभाधीशपादाब्जं चेत आमज ॥ १६७ ॥



शरबन्धः —

वल्लभं देशिकवरं स्तौम्यमितं मिमिक्षति ।
य. सदा दासतामेत क्षेमै स्तैस्तैः सुदुर्लभैः ॥ १६८ ॥



गोविन्दो देशिकाग्र्यस्य पादपङ्कज संश्रयात् ।
यस्य वर्वत्तिसततं तुष्टु संसरणात्सम: ॥ १६९ ॥

अत्र "गोपायतु" इति क्रियापदं गुप्तम् ।

हे वल्लभ ! भवदीया मशिश्रयद्‌यभ्ररणां कमलयुगलीम् ।
त्रासपतेऽखिलपङ्कान्‌भवभूतांस्त्वां वय सततम् ॥ १७० ॥

अत्र "भजामहे" इति क्रियापद गुप्तम् ।

भक्ताम्बुजनवतपनं श्रीजामिनिषेवणव्यसनम् ।
निगम समनुगतवचन जगतो हेतुं धृतगुरुवररूपम् ॥ १७१ ॥

अत्र"भजामहे" इतिक्रियापद गुप्तम् ।

तेषा मा चार्य्यवर्य्याणां, काम्यन्तद्भवदु: खिनाम् ।
चरणश्रीणांपङ्कन्घ नमत. प्रतिसूरतम् ॥ १७२ ॥

अत्र "प्रणम्यते" इतिक्रियापदं गुप्तम् ।

चञ्चलस्यमनसो महौषधम् कारक व्रजकुमार सन्निधे:
कारण निखिलशस्य कर्मणो देशिके शितुरजस्रमेजताम् ॥ १७३ ॥

अत्र "चरणमितिपादत्रये गुप्त कर्तृ पदम्

सुजनानां सुरवसाध्या प्रबोध मुच्चैस्तरा ददतीम् ।
स्वैर धियानतानां विवर्द्धिनीं श्रीगुरोः स्तौमि ॥ १७४ ॥

अत्र सुबोधिनीमितिकर्म्मपदं गुप्तम्



**हलबन्धः -**

रे मनः कमलाकान्त स्वान्तवश्यत्वद नम ।
ममत्वाहन्त्वदोषघ्न गुरूणां वल्लभ बरम् ॥ १७५ ॥





शक्तिबन्धः—

सन्त श्रीवल्लभ बन्देऽह देशिकवरष्ठुतम् तसतक्कृपाम्भोधि ददत नतवाञ्छितम् ॥ १७६ ॥



मुरजबन्धः –

दिशन्तं कलित मङ्क्षुविशन्तं गद्दं तन्मनः ।
नमन्त दधत गुञ्जाम् स्वमत कलितं गुरुम ॥ १७७ ॥



शब्दालंकृतयः काश्चिद वृत्तभेदैर्निरूपिताः ।
तासादिग्दर्शनं यस्मादायासेनविना भवेत ॥ १७८ ॥

प्रामाण्यं जायतांचित्ते पूर्वेषामिति लक्षणम् ।
अन्येष्वि क्वचिन्नूनं गुणग्रहणशीलिषु ॥ १७९ ॥

भेदा अत्र न लिख्यन्ते मुख्येऽन्तर्भावसम्भवात् ।
स्वतो वस्तु प्रबोधाच्च मुधाग्रन्धस्य विस्तरात् ॥ १८० ॥

इत्यलङ्कारमिषतो देशिकेशपदाब्जयोः ।
स्मृतिः सन्तापसन्दोहहारिणी समदीप्यत ॥ १८१ ॥

इत्थमाचार्या चरणाः शरणागतवत्सलाः ।
मयिदीने मतेर्हीने शस्ता ददतु शेमुषीम् ॥ १८२ ॥

अथ श्रीवल्लभार्य्यागमलङ्कारसमुच्चयः ।
गर्वोच्छ्रायगत स्वर्ग-द्रुमसन्दृतकान्तिषु ॥ १८३ ॥

दधत्सु सततं नेत्रभ्रमर स्मितकेसरम् ।
श्रीवातप्रीतिरुचिदोदच्चच्छ विमुखाम्बुजम् ॥ १८४ ॥

नाशिल क्षत्क्वापिकिलयान् विवेकपरिपन्थिनी ।
निशीथिनी सुवियुष स्तेष्विन्दो वर बन्धुषु ॥ १८५ ॥

औचित्यचञ्चञ्चदित प्रोद्यद्रुचिरकीर्त्तिषु ।
इन्दिरारमण प्रेमप्रवाहोदात्तवृत्तिषु ॥ १८६ ॥

तद्वशमणि गोविन्द देशिकेन्द्रेषु साम्प्रतम् ।
गोस्वामिवशतिलकेष्वत्र श्रीमत्सु साञ्जलि ॥ १८७ ॥

नन्वाङ्गिरसभार्म्यश्व मौद्गल्य प्रवरैर्युजा ।
आपस्तम्बेन सूत्रेण तैत्तिरीयारव्यशाखया ॥ १८८ ॥

मौद्गल्येन च गोत्रेण, वेल्लनाटीयसंज्ञया ।
जात्या युक्तेन चान्ध्रेण गोविन्दार्य्याङ्घ्रिसेविना ॥ १८९ ॥

बिद्वद्वरिष्ट गोविन्दोपाध्यायतनुजन्मना ।
निवेद्यते मया भट्ट रामकृष्णेन शर्म्मणा ॥ १६० ॥

प्रज्ञासचिवा. श्रीश श्रीमद्गोविन्द देशिकाः समुदम् ।
सगुना.शतमिह शरदा वरिवयस्यन्तो विराजन्ताम् ॥ १६१ ॥

इति श्री गोस्वामि तिलक श्री गोविन्द देशिक चरणाब्ज सेवकेन इति मथुरा वास्तव्य-पण्डितराज षड्भ्रातृ भट्ट गोविन्दोपाध्याय तनुजेन राजस्थान स्थित नाथद्वारा नगर वासिना भट्ट रामकृष्णोपाध्यायेन (मणिचन्द्र) विरचितोऽलङ्कार समुच्चयः समाप्तः ।

श्रीशःपातु ।





उपाध्याय भट्ट रामकृष्ण शास्त्री
(मणिचन्द्र)

'गोविन्द'-वल्लभ-वल्लभ, भक्त-श्रेनाथ-चरण ।
कुल-दीप तात-हृदय-'मणि', सस्कृत-कवि 'भूषण' ॥

र० 'व्रजभूषण'

# एक आन्ध्र वेल्लयनाटीय संस्कृत काव्यकार

## ( शास्त्री भट्ट रामकृष्ण (मणिचद्र) उपाध्याय )

संस्कृत साहित्य विश्व साहित्य में अपना विशिष्ट स्थान रखता है। भारत वर्ष मे तो सस्कृत साहित्य की उत्कृष्ट एव सराहनीय साहित्यक परम्परा रही है। मध्यकालिक सस्कृत साहित्य भण्डार मे जो साहित्यक कृतियो की सतत् अभिवृद्धि हो रही थी वह साहित्य सृजन धारा आज भी अक्षुण्ण विद्यमान है। आज भी अनेक सरस्वती मा के वरद पुत्र अनवरत काव्य साहित्य सृजन कर वेदवाणी को समृद्ध कर रहे हैं। धन्य है ऐसे साहित्य आराधको को जिन पर विद्या की अधिष्ठात्री सरस्वती गौरव अनुभव कर रही है किन्तु वर्तमान समाज ऐसे साहित्य तपस्वियो को उपेक्षित करता जा रहा है। यदि आज ऐसे मौन साहित्य विभूतियो के साहित्य का अ कनन किया जावे तो उन मे से अनेक निर्विवाद उत्कृष्ट साहित्यकार सिद्ध होगे ।

वर्तमान समय में शास्त्रीय भट्ट श्री रामकृष्ण ( मणिचन्द्र ) उपाध्याय सस्कृत साहित्य-जगत मे मौन साहित्य-तपस्वी है। आपसे अभी तक सस्कृत साहित्य जगत बहुत कम परिचित हो पाया है। आपका जन्म पावन कालिन्दी (यमुना) नदी के किनारे मथुरा नगरी मे हुआ। आपका बाल्यकाल मथुरा ( उत्तर प्रदेश) ग्वालियर (मध्यभारत, मे विशेषत व्यतीत हुआ आपकी प्रारम्भिक शिक्षा दीक्षा श्री भट्ट पुरूषोतमजी महाराज (प्रमातामह), श्रीमालचदजी शास्त्री श्री मगनजी उपाध्याय (पितामह) श्रीगोविन्दलालजी उपाध्याय (पिता श्री) आदि सस्कृत भाषा साहित्य व्याकरण के उद्‌भट्ट विद्वानो एव वेद–कर्मकाण्ड के मर्मज्ञो के सानिध्य व माग दर्शन मे परिपूर्ण हुइ। आपने श्रीवामनाचार्यजी काव्यरत्न श्री बलभद्रजी भट्ट श्रीवरजी चतुर्वेदी आदि व्याकरणाचार्य–साहित्याचार्यो के दिग्द-शन मे शास्त्री आचार्य तक अध्ययन किया। २० वर्ष के लगभग जगद्‌गुरू श्री मद् वल्लभाचार्य महाप्रभुजी के पावन वल्लभ वश तृतीय गृह पीठाधीश्वर गोस्वामी श्री व्रजभूषणजी महाराज काकरोली के तनुज चिरजीव गोस्वामी श्रीव्रजेशकुमार प्रभृति को सस्कृत का सफलता पूर्वक अध्ययन कराया। अब आप इस समय गोस्वामी वश तिलक परम पूज्य आचार्य वर्य तिलकायत गोस्वामी श्री१०८ गोविन्दलालजी महाराज के सानिध्य मे हैं।

आप संस्कृत साहित्य के उत्कृष्ट काव्यकार ही नहीं अपितु कर्मकाण्ड, वेद, सम्प्रदाय आदि के विशेषज्ञ व मर्मज्ञ हैं। आपने निम्नलिखित संस्कृत काव्य ग्रन्थों का सृजन किया है:—

१ - श्री शशतकम् २·- ब्रजेन्दु सप्तति ३·- शिववल्लभ स्तोत्रम् ४,- ब्रजेवाचा: ५ - ब्रजवल्लवी वाचिकम् ६ - देशिकालकार समूचय ७·- विवाह वर्णनम् ८.- उपनयन वर्णनम् ९ - मगला शासनम् १०:- पञ्चाशत्समस्या पूर्त्तय: ११:- पाञ्चजन्य स्तव: १२.- द्वारकेश स्तुति: १३.- प्रकीर्ण श्लोका: १४.- गद्य निबन्ध आदि।

आपने रेडियो वार्तायें ( हिन्दी भाषा ) एवं उर्दू की गजलें व शेर आदि भी लिखे हैं जिनकी प्रथक प्रकाशन योजना क्रियान्वित करने का विचार किया जा रहा है। श्रीशशतकम्, ब्रजेन्दु सप्तति शिव वल्लभ स्तोत्र ब्रजेवाच: ब्रजवल्लवी वाचिकम् आदि प्रकाशित हो चुके हैं एवं देशिकालकार समुच्चय संस्कृत साहित्य प्रेमियो व मर्मज्ञो को अवलोकनार्थ प्रदान किया जा रहा है। इस ग्रन्थ में समस्त अलकारो का निर्वाह करते एक ही विशिष्ट आचार्य चरण का सुन्दर वर्णन किया गया है।

वास्तव मे संस्कृत साहित्य मर्मज्ञ ही उक्त संस्कृत ग्रन्थों का परिशीलन कर काव्यकार की कठोर साधना का सही सही मूल्याकन करेंगे। आपने अनेक विद्वज्जन सभा गोष्ठियो आदि मे संस्कृत साहित्य पर समालोचनार्थ सुन्दर वार्तायें दी है। आकाश वाणी जयपुर से नैषध चरित्र, भट्टकाव्यम् आदि पर अनेक आपने भावपूर्ण, तथ्यविश्लेषणात्मक एव अनुसंधानात्मक वार्तायें प्रस्तुत की आपके समग्र संस्कृत ग्रन्थो मे शृंगारिक परिकल्पना भक्त भावना एव प्रौढकाव्य तत्व का सुन्दर समन्वय मिलता है। कुछ उदाहरण प्रस्तुत हैं।

**श्रीशशतकम्—**

> स्तृणाति भूमृत वपुर्ननु भृणाति दृष्टया दृश
> गृणाति नहि मे क्वचित् बत शृणाति न प्रार्थनम्।
> कृणाति गति मायतो हृदि हृणाति मा नात्यसो
> वृणाति बहु चिन्तयन्निति पृणातु गोपीपति:

**ब्रजेन्दु-सप्तति—**

> १ राधारूप्य शुक इति ललिता त याचमानो य·
> चरणानतोऽति मात्रं तस्य चरण–सारसं नौमि
> २ क्रन्दति सखि ! नो हृदय, कन्दति गिरिसानुनोऽर्जुनी नियमम्
> वन्दति गोकुलवलयम् नन्दतुमाऽय मयि बहु सप्रणयम्।

